# अथद्वादशकोशानांसंग्रहः

तत्रादौमेदिनी १ ....　　ततएकाक्षरी २ ...

द्वौद्विरूपे ४ .....　　ततस्त्रिकाण्डशेषः ५

अनेकार्थध्वनिमंजरी ६　　हारावली ७ ...

धनञ्जय ८ ...　　वररुचिकोश ९ ..

नाममालाकोश १० .　　मातृकाकोश ११ ..

अव्ययकोशः
१२

॥वाराणसीप्रसादस्यनियोगेनतुयत्नतः॥का
शीसंस्कृतमुद्रायामङ्कितोयंविचक्षणै.॥ १ ॥

श्रीकाशीजीमे

॥ज्ञानवापीकेपूर्वफाटकपरश्रीविश्वनाथजी
केपसश्री ३ युतमहाराजशिवलालदुबेजीके
मकानमेछपी

॥जिसकोलेनाहोयउन्होनेइसछापेखानेकेकार्य
सम्पादकबाबूवाराणसीप्रसादपाकचौरीगली
मेभाईप्रतापसिंहजीकेदुकानपरमिलेगी

संवत् १९२९

# ॥अथमेदिनीकोशःप्रारम्भः॥

## ॥श्रीगणेशायनमः॥

॥श्रीगणेशायनमः वृषांकायनमस्तस्मैयस्यमौलिविलम्बिनी
जटावेष्टनजांशोभांविभावयतिजान्हवी १ पूर्वाचार्यकृतीर्वी
क्ष्यशब्दशास्त्रंनिरूप्यच नानार्थशब्दकोशोयंलिंगभेदेनक
थ्यते २ प्रायशोरूपभेदेनविशेषणवशात्क्वचित् स्त्रीपुन्नपुं
सकंज्ञेयंविशेषोक्तेश्चकुत्रचित् ३ त्रिलिङ्ग्यांत्रिष्विति पदंमिथु
नेतुद्वयोरिति निषिद्धलिंगशेषार्थंत्वंताथादिनपूर्वभाक् ४ रूपा
द्यत्तलिङ्गमुक्तंलिपिभ्रातिह्रिदेक्वचित् विशेष्यनिघ्नेऽनुक्तेऽ
पिविज्ञेयावाच्यलिंगता ५ गुणेशुक्लादिकद्वाद्याःपुंसिस्युस्त
द्वतित्रिषु तीक्ष्णाद्याश्चगुणेक्लीबंगुणिलिंगास्तुतद्वति ६ क्लीब
पुंसोरपिस्त्रीत्वंक्वाप्यल्पत्वविवक्षया जातिवाचकशब्दानामपि
तत्स्त्रीविवक्षया ७ उद्भिदःप्रसवेक्लीबेहरीतक्यादयःस्त्रियां
पुष्पेजातीप्रभृतयःस्वलिंङ्गाव्रीहयःफले ८ प्राङ्नानार्थान्नत
ल्लिंगंद्वयोर्द्वंद्वेनचैकता शब्दावृत्तिर्नलिंगैक्येसप्तमीनविशेष
णे ९ क्लीबेनपुंसकेपुंसिस्त्रियांयोषितिचद्वयोः त्रिषुचेत्यादि
यद्रूपंतल्लिंगस्यैववाचकम् १० नानार्थःप्रथमान्तःस्यात्सर्वत्रा
दौप्रदर्शितः सप्तम्यंताभिधेयेषुवर्तमानोविनिश्चितः ११ एक
द्वित्रिचतुःपंचषड्वर्णानुक्रमात्कृतः स्वरकाद्यादिकाद्यंतवर्गै

नानार्थसंग्रहः १२ नानार्थकोशपुस्तकभाराज्जनदुःखहानये
कृतिनः मेदिनिकरकृतकोशो विशुद्धलिंगोऽभिलिख्यतामकः ।
१३ कैकं मूको ब्रह्मणि समीरात्म यमदक्षेषु भास्करे कामग्रंथौ
चक्रिणि च पतत्रिपार्थिवे तथा १४ मयूरेऽग्नौ न पुंसि स्यात्सुख
शीर्षजलेषु कम्॥ कद्विः अर्कोऽर्कपर्णे स्फटिके रवौ ताम्रे
दिवसतौ १५ अंको रूपकभेदांऽगचिन्हरेखाजिभूषणे रूपका
शांतिकोत्संगस्थानेऽकं पापदुःखयोः १६ एकं संख्यांतरे श्रेष्ठ
केवलेतरयोस्त्रिषु कर्कः कर्के निलेवन्हौ शुक्लाश्वे दर्पणे घटे ॥
१७ कंकः स्मृतो द्विजे ख्यातो लोहपृष्ठकृतांतयोः कल्कोऽ
स्त्री घृततैलादिशेषे दंभे विभीतके १८ विट्किट्टयोश्च पापे च त्रिप
पापाशये पुनः काकः स्याद्वायसे वृक्षप्रभेदे पीवसर्पिणि १९ ।
शिरोऽवक्षालने मानप्रभेदद्वीपभेदयोः काका स्यात्काकनासायां
काकोलीकाकजंघयोः २० रक्तिकायां मलप्यां च काकमाच्यां च
योषिति काकं सुरतबंधे स्यात्काकानामपि संहतौ २१ कि
ष्कुर्द्वयोर्वितस्तौ च प्रकोष्ठेऽपि करेऽपि च कोकश्चक्रे वृके ज्ये ।
ष्ठ्यां खर्जूरीद्रुमदर्दुरे २२ छेको गृहाश्रितमृगपक्षिणोर्नागरे त्रि
षु टंको नीलकपित्थे च खनित्रे टंकने स्त्रियां २३ जंघायां स्त्री
पुमान्कोपे कोशासिग्रावदारणे तर्कः कांक्षावितर्कोह हेतुशास्त्रे
षु कथ्यते २४ त्रिका कूपस्य नेमौ स्यात्त्रिकं पृष्ठाधरे त्रये ।
तोकं पुत्रे सुतायां च द्विकः स्यात्काककोकयोः न्यंकुर्मुनौ मृ
गे पुंसि नाकस्तु त्रिदिवे बरे २५ नाकुर्मुन्यंतरे पृथ्वीधरव ।
ल्मीकयोः पुमान् निष्कमस्त्री साष्टहेमशते दीनारकर्षयोः ।
२६ वक्षोलंकरणे हेमपात्रे हेमपलेऽपि च २७ पंको स्त्री क
र्दमे पापे पाकः परिणतौ शिशौ केशस्य जरसा शौक्ल्ये स्थाल्यादौ
पचनेऽपि च २८ बकस्तु बकपुष्पे स्यात्कुबेरादे च रक्षसि ।
मूके छिद्रे च काले च भेको मंडूकमेघयोः २९ मुष्को ।

मोक्षकरक्षेस्यात्संहतेहृषणेऽपिच मूकस्त्ववाचिनादैत्यरेकः-
कृपणमंदयोः ३० राका तद्यतरेकच्छूनकजातरज स्त्रियाम्
संपूर्णदुतिथौ रेकः शंकानीचविरेचने ३१ रोकस्तुक्रय-
भिद्रीत्यो रोकं नाविचलेबिले लंका रक्षःपुरीशाखाशाकि
नीकुलटासुच ३२ लोको जनेपिभुवने वल्कं वल्कलश-
ल्कयोः वंकः पर्याणभागेनानदीपात्रेचभंगुरे ३३ शल्कं
तुशकलेवल्के शको जात्यंतरेनृपे शंकुः संख्याऽस्त्रयादो-
भित्कीलांशकलुषेषुना ३४ शंका त्रासेवितर्केच शाकोद्वी
पांतरेऽपिच शक्तौद्रुमविशेषेचपुमान्हरितकेऽस्त्रियां ३५ शु
को व्यासस्रुतेकीरेरावणस्यचमंत्रिणि शिरीषपादपेपुंसिग्रंथि
पर्णेनपुंसकम् ३६ शुल्कं घट्टादिदेयेस्याद्वराद्दर्थग्रहेस्त्रिया-
शूका स्त्रीशुगदलयो श्लोकः पद्येयशस्यपि ३७ शौकस्तु
कगणेस्त्रीणांकरणे सूक इत्यपि बाणवातोत्पले स्तोकस्त्रि
ष्वल्पेचातकेपुमान् ३८ कत्रिः अशोकस्त्रिषुनिःशोके
पुंसिकंकेल्लिपादपे स्त्रियांतुकटुरोहिण्यांपारदेस्यान्नपुंसकम्
३९ अलका कुबेरपुर्यामस्त्रियांचूर्णकुंतले अभीकः-
कामुकेक्रूरेनिर्भयेत्रिपुनाकवौ ४० अनीको स्त्रीरणेसैन्ये
व्यणुको निपुणाऽल्पयोः अलीकमप्रियेऽपिस्याद्दिव्यसत्येन
पुंसकं ४१ अनूकं तुकुलेशीलंपुंसिस्याद्गतजन्मनि अंशुकं
श्लक्ष्णवस्त्रेस्याद्वस्त्रमात्रोत्तरीययोः ४२ अंतिकं निकटे-
वाच्यलिंगंस्त्रीशातलौषधौ चुल्याज्येष्ठभगिन्यांचनाट्योक्त्या-
कथ्यतेऽ तिका ४३ अलर्को धवलार्केस्याद्योगान्मादितकु
कुटे अंबिका पार्वतीमात्रोर्धृतराष्ट्रस्यमातरि ४४ अंधिका
द्यूतभेदेचरजन्यामपियोषिति अम्लिका तिंतिडीचाम्लोद्गार
चांगेरिकासुच ४५ अर्भकः कथितोबालेमूर्खेपिचकृशेपिच-
आनकः पटहेभेर्यांमृदंगेध्वनदंबुदे ४६ आढकी तुतुवर्यां

स्त्रीपरिमाणांऽतरे त्रिषु आलोकस्तु पुमान्द्योते दर्शने बंदिभाष
णे ४७ आन्हिकं दिननिर्वर्त्ये त्रिलिंगमथ नद्वयोः नित्यक्रिया
भोजनयोर्वेदे प्रकरणस्य च ४८ आतंको रोगसंतापशंकासु
मुरजध्वनौ इक्ष्वाकुः कटुतुंब्यां स्त्री सूर्यवंशनृपे पुमान् ४९
उलूकः पुंसि काकारौ विद्रे भारतयोधिनि उदर्क एष्यत्काली
नफले मदनकंटके ५० उष्मकस्तु निदाघे स्यादातुरे क्षिप्रकारिणि
उष्ट्रिका मृत्तिकाभांडभेदेपि करभस्त्रियाम् ५१ ऊर्मिका चांगुलीये
स्याद्ह्रस्व भंगतरंगयोः कनकं हेम्नि पुंसि स्यात्किंशुके नागकेसरे ५२
धत्तूरे कांचनारे च कालीये चंपकेऽपि च करकस्तु पुमान्पक्षिवि
शेषे दाडिमेपि च ५३ द्वयोर्मेघोपले न स्त्री करके च कमंडलौ क्र
मुकस्तु पुमान्भद्रमुस्तके ब्रह्मदारुणि ५४ फले कार्पासिकाया
श्च पट्टिका लोध्रपूगयोः कटकोऽस्त्री नितंबाद्रेर्दंतिनां दंतमंडने
५५ सामुद्रलवणे राजधानीवलययोरपि कटुका कटुरोहिण्यां
स्त्रियां ज्योषे न पुंसके ५६ कंटको ना स्त्रियां क्षुद्रशत्रौ मत्स्यादि
कीकसे नैयोगिकादिदोषोत्कौ स्याद्रोमांचद्रुमांगयोः ५७ करं
कोमस्तकेऽशस्य नालिकेरफलास्थनि कलंकोंऽकेऽपवादे च
कालायसमलेऽपि च ५८ कर्णिका करिहस्ताग्रे करमध्यांगुलावपि
क्रमुकादिछदां शल्वे वराटे कर्णभूषणे ५९ कणिका कथ्यतेऽत्यं
त सूक्ष्मवस्त्वऽग्निमंथयोः कचाकुस्तु दुराधर्षे दुःशीले च बिले
शये ६० कंचुको वारबाणे स्यान्निर्मोके करभेपि च वर्धा
पकगृहीतांगस्थितवस्त्रे च चोलके ६१ कंचुक्योषधिभेदेऽथ
कारिका नटयोषिति कृतौ विवरणश्लोके शिल्पयातनयो
रपि ६२ नपुंसकं तु कर्मादौ कारकं कर्तरि त्रिषु कामुकः क्रम
नेऽशोकपादपे चाऽतिमुक्तके ६३ कार्मुकं धनुषि स्यान्नावे
णौ कर्मक्षमेऽन्यवत् कावृकः कुकवाकौ स्यात्पीनमस्तक
कोकयोः ६४ क्षारकः पक्षिमत्स्यादिपिटके जालकेऽपि च ॥

कालिकाचंडिकाभेदेकार्त्स्न्येवृश्चिकपत्रयोः ६५ क्रमदे
यवस्तुमूल्येधूसरीनवमेघयोः पटोलशाखारोमालीमांसीका
काशिवासुच ६६ मेघावलौचकिंपाकोमहाकालफलाद्
योः कीचकोदैत्यभिद्वातहतसस्वनवंशयोः ६७ कीटकः
कृमिजातौनानिष्ठुरेपुनरन्यवत् कुलकंतुपटोलेस्यात्सबद्ध
श्लोकसंहतौ ६८ पुंसिवल्मीककाकेंदुकुलश्रेष्ठेषुकथ्यते ।
क्षुल्लकस्त्रिषुनीचेऽल्पेकुशिकोमुनिसर्जयोः ६९ कुषा
कुः कपिवन्ह्यर्केनापरोत्तापिनित्रिषु कुलिकोनागभेदेस्याद्द्रु
भेदेकुलसत्तमे ७० क्षुरकः कोकिलाक्षेस्याद्गोक्षुरेतिलक
द्रुमे कूपकोगुणवृक्षेस्यात्तैलपात्रेककंदुरे ७१ उदपाने
ऽच्युतायांतुकूपिकाऽभोगतोपले कूलकंनस्त्रियांस्तूपे
पुंसिस्यात्कृमिपर्वते ७२ कूर्चिकासूचिकायांचतूलिकायां
चकुड्मले कपाटांकुडकेक्षीरविकृतावपियोषिति ७३ कृष
कः पुंसिफालेस्यात्कर्षकेत्वभिधेयवत् कोरकोऽस्त्रीकुड्म
लेस्यात्कक्कोलकमृणालयोः ७४ कौतुकंत्वभिलाषेस्यादु
त्सवेनर्महर्षयोः तथापरंपरायातमंगलेचकुतूहले ७५ वि
वाहसूत्रगीतादिभोगयोरपिनद्दयोः कौशिकोनकुलेव्याल
ग्राहेगुग्गुलुघूकयोः ७६ कोषज्ञोलूकयोश्चस्याद्विश्वामित्र
मुनावपि कौशिकीचंडिकायांचनदीभेदेचयोषिति ७७ ख
नकोनेंदुरेसंधिचौरेत्रिष्ववदारके खड्गिकोमहिषीक्षीरफे
नशौनिकयोरपि ७८ स्यात्खोलकस्तुपाकेशिरस्त्रवल्मीक
पूगकोशेषुगणिकायूथीवेश्येभीतकारीपुनातुदैवज्ञे ७९ ग्रं
थिकंपिप्पलीमूलेगुग्गुलुग्रंथिपर्णयोः करीरपुंसिदैवज्ञेसह
देवाख्यपांडवे ८० गंडकःपुंसिखड्गेस्यात्संख्याविद्याप्रभेद
योः अवच्छेदेंऽतरायेचगंडकीसरिदंतरे ८१ ग्राहकोघा
तिविहगेधान्यानांचगृहीतरि गांधिकोलेखकेऽपिस्यात्पुं

धिष्ण्यवह्नारिणि ८२ गुंडकोमलनेधूलौकलोक्तिस्नेहपात्र
योः गृह्यकोनिघ्नकेछेके गैरिकंधातुरुक्मयोः ८३ गोल
कोविधवापुत्रेजारात्तस्यान्मलिकेगुडे गोरकुःस्यात्पुमा
न्पक्षिभेदलग्नकबंदिनोः ८४ चषकोऽस्त्रीसुरापात्रेमधु
मद्यप्रभेदयोः चुलकःप्रसृतौभांडभेदेचुलुकवत्पुमान्
८५ चतुष्कीमसकहर्यपुष्करिण्यंतरेपिच चारकःपा
लकेऽप्यादेःस्यात्संचालकबंधयोः ८६ चित्रकेतिलके
नात्तुव्याघ्रभिच्चंचुपाठिषु चुंबकश्चुंबनपरेधूर्तोयस्कांतयो
रपि ८७ बहुग्रंथैकदेशज्ञेधटस्योद्धावलंबने चुल्लकी
शिशुमारेऽपिकुंडीभेदेकुलांतरे ८८ चूलिकानाटकस्यां
गेकर्णमूलेचहस्तिनां चूतकःकूपकेप्याम्रजनकःपितृभू
भुजोः ८९ जंबूकःफेरवेनीचेपश्चिमाशापतावपि जतु
का जिनपत्र्यांजतुकंहिंगुलाक्षयोः ९० जाहकोघो
घमार्जारखट्वांकारुंडिकासुच जालकंकोरकेदंभेकुला
यानाययोरपि ९१ नपुंसिमोचकफलेस्त्रियांतुवसनांतरे गि
रिसारेजलौकायामपिस्याद्विधवास्त्रियां ९२ भटानामश्म
रचितांऽगरक्षिण्यांचजालिका जालिकोवाच्यवज्ग्रामजा
लिजालोपजीविनोः ९३ जीवकःप्राणकेपीतशालरूप
णयोरपि कूर्चशीर्षेपिपुंसिस्यादाजीवेजीविकामता ९४
त्रिषुसेविनिवृध्याशिजीविनोराहितुंडिके झल्लिकोद्वर्तनपटे
स्त्रियांद्योतेचझिल्लिका ९५ आतपस्यरुचौझिंट्यांटंटकः
शोणकाल्पयोः डिंबिकाजलबिंबेस्यान्मोणकेकामुकस्त्रि
यां ९६ तंडकःखंजनेफेनेसमासप्रायवाचिच गृहदा
रुतरुस्कंधमायाबहुलकेष्वपि ९७ तक्षकस्तुपुमान्नाग
राजभेदेचवर्द्धकौ तारकोदैत्यभित्कर्णधारयोर्नहृयोर्दृशि
९८ कनीनिकायामृक्षेचनपुमांस्त्वांतरित्रिषु तिलकोद्रु

सरोगाश्वभेदेचतिलकालके ९९ क्लीबेसौवर्चलक्लोम्नोनेस्त्रि
यांतुविशेषके त्रिशंकुर्नाराजभेदेशलभेत्वषदंशके १०० ।
तुरुष्कःसिल्हकेम्लेंच्छेजातौदेशांतरेऽपिच तूलिकाकू
र्चिकायांचशय्योपकरणेऽपिच १०१ दर्शकःस्यात्प्रतीहारे
दर्शयितृप्रवीणयोः दारकोबालकेऽपिस्याद्भेदकेत्वभिधेय
वत् १०२ द्रावकोग्रावभेदेस्याद्विदग्धेमोषकेऽपिच दीप
केत्वागलंकारेवाच्यवद्दीप्तिकारके ३ दीप्यकस्त्वाऽजमो
दायांयवानीवर्हिचूडयोः दुन्दुकोगंधकुट्यांस्याद्विह
रादावकाशके ४ दूषिकातूलिकायांचमलेस्याल्लोचन॰
स्यच धनिकासाधुनार्यांनाधान्याकेत्रिसाधुधनिनोश्च ५
स्याद्धेनुकाकरिण्यांधेनावपिनातुदानवविशेषे धेनुकंक
रणेस्त्रीणांधेनूनामपिसंहतौ ६ नर्तकःकेवलेपोटगलचा
रणयोर्नटे नर्तकीलासिकायांचकरेण्वामपियोषिति ७ न
ग्निकापिकुमार्यांस्यात्पुमान्क्षपणबंदिनोः नरकःपुंसिनि
रयदेवारातिप्रभेदयोः ८ नंदकोहरिखड्गेचहर्षकेकुलपा
लके नालीकःशरशल्यांगेष्वब्जखंडेनपुंसके ९ नायः
कोनेतरिश्रेष्ठेहारमध्यमणावपि निर्मोकोमोचनेव्योम्निस
न्नाहेसर्पकंचुके १० नीलिकानीलिनीक्षुद्ररोगशेफालि
कासुच पराकस्तुव्रतेखड्गेप्रसेकःसेचनेच्युतौ ११ प्र
तीकोऽवयवेऽपिस्यात्प्रतिकूलविलोमयोः ॥ पद्मकंस्या
त्पद्मकाष्ठविंदुजालकयोरपि १२ पक्षकस्तुपुमान्पार्श्वद्वा
रेचपार्श्वमात्रके पल्यंकोमंचपर्यंकेत्वपीपर्यस्तिकासुच
१३ पताकावैजयंत्यांचसौभाग्यनाटकांगयोः पातुकः
पतयालौस्यात्प्रपातजलहस्तिनोः १४ प्राणकःसत्वजा
तीयेजीवकद्रुमचोलयोः पाटकःस्यान्महाकिष्कौकटकां
तरवाद्ययोः १५ अक्षादिचोलनेमूलद्रव्यापचयरोधसोः ॥

पालंकः शल्लकीशाकभेदयोः प्राजिपक्षिणि १६ पावको
ऽग्नौसदाचारेवन्हिमंथेचचित्रके भल्लातकेविडंगेऽथप्रिय
कः पीतशालके १७ नीपेचित्रमृगेचालौप्रियंगौकुंकुमेऽपि
च पिण्याकोऽस्त्रीतिलकल्केहिंगुबाल्हीकसिल्हके १८
पिनाकोऽस्त्रीरुद्रचापपांसुवर्षत्रिशूलयोः पिटकस्त्रिषु
विस्फोटेमंजूषायांपुनःपुमान् १९ पिष्टको घृतपूपादौनेत्र
रोगांतरेऽपिच पुलकः कृमिभेदेप्रस्तरभेदेचमणिदोषे २०
रोमांचेहरितालेगजान्नपिंडेचगंधर्वे पुलाकस्तुच्छधान्ये
स्यात्संक्षेपेभक्तसिक्तके २१ पुष्पकंरीतिपुष्पेचविमानेध
नदस्यच नेत्ररोगेतथारत्नकंकणेचरसांजने २२ लोहकां
स्यमृदंगारशकट्यांचनपुंसकं स्यात्पुत्रिकापुत्तलिका
दुहित्रोर्यावतूलके २३ नापुत्रेसरभेधूर्तेशैलरस्सप्रभेदयोः
पूर्णकः स्वर्णचूडेस्यान्नासाछिन्न्यांतुपूर्णिका २४ पृदाकु
र्वृश्चिकेव्याघ्रेसर्पेचित्रकयोःपुमान् पृथुकः पुंसिचिपिटे शि
शौस्यादभिधेयवत् २५ पेचकोगजलांगूलमूलोपांतेच
कौशिके पेटकंपुस्तकादीनांमंजूषायांकदंबके २६ वल्मी
कोरोगभेदेचनाकौचपुन्नपुंसकम् बंधूकंबंधुजीवेस्या
द्बंधूकः पीतशालके २७ बंधकःस्याद्विनिमयेपुंश्चल्यां
स्याच्चबंधकी बाहुलः कर्कटेचाऽर्केदात्यूहेजलखातके
२८ वराकः शंकरेपुंसिशोचनीयेऽभिधेयवत् बालकस्तु
शिशावश्वबालधौहयहस्तिनोः २९ अंगुलीयकह्रीबेरवलये
पुंसिवालिका वालायांवालुकापत्रकाहलाकर्णभूषणे ३०
वारकोऽश्वगतौपुंसिवाच्यवत्स्यान्निषेधके वालुकासि
कतास्रस्याद्वालकंत्वेलवालुके ३१ भर्मकंरोगभेदेस्या
द्दिंडककलधौतयोः श्यामको जंबुकेधूर्तेसूपावर्त्ताश्वभे
दयोः ३२ भालांकः करपत्रेस्याच्छाकभेदेचरोहिते महा

लक्षणसंपन्नपुरुषेकच्छपेहरे ३३ भूमिकारचनायांस्याद्दे
शांतरपरिग्रहे भूतीकमपिभूनिंबेरौष्यकर्पूरकेतृणे ३४
मधुकामधुपर्ण्यांस्यान्मधुकंक्लीतकेखगे वल्यंतरेनाम
शकोरोगकीटप्रभेदयोः ३५ मंडूकःशोणकेमुन्यंतरेस्याद्भूद
वर्चसि मडूकपर्ण्यांमंडुकीमल्लिकोहंसभिद्यपि ३६ मल्लि
कातृणशून्येपिमीनमृत्पात्रभेदयोः मामकंस्यान्मदीयार्थे
त्रिषुपुंसितुमातुले ३७ मातृकाधातकामात्रोर्देवीभिद्वर्णमा
लयोः मालिकासप्तलापुत्रीग्रीवालंकरणेषुच ३८ पुष्पमा
ल्येनदीभेदेपक्षिभेदेतुमालिकः मेचकस्तुमयूरस्यचंद्रके
श्यामलेपुमान् ३९ तद्युक्तेवाच्यवत्क्लीबंस्रोतोजनांधकार
योः मोचकःकदलेशिग्रुनिर्मोचकविरागिषु ४० मोदकः
खाद्यभेदेऽस्त्रीहर्षकेपुनरन्यवत् यमकंयमजेशब्दालंका
रेपुंसिसंयमे ४१ याजकस्तुगजेराज्ञोयाज्ञिकेप्यथयाज्ञि
कः याजकेचकुशेचाथयुतकंसंशयेयुगे ४२ नारीवस्त्रांच
लेपुस्तेचलनाग्रेऽपियौतके यूथिकाम्लानकेपुष्पविशेषे
पिचयोषिति ४३ रसिकास्त्रीरसालेस्युरसयोःसरसेत्रिषु
रक्तकोऽम्लानबंधूकरक्तवस्त्रानुरागिषु ४४ राजिका
पिचकेदारेराजसर्षपरेखयोः रात्रकंपंचरात्रेनावेश्यावेश्मा
व्दवासिनि ४५ रुचकोबीजपूरेचनिष्केदंतकपोतयोः न
द्धयोःसर्जिकाक्षारेप्यश्वाभरणमाल्ययोः ४६ सौवर्चलेपि
मांगल्यद्रव्येचाप्युत्कटेपिच रुंडिकाद्वारपिंड्यांचदूतिका
यांरणक्षितौ ४७ रूपकंनाटकेमूर्तेकाव्यालंकरणेपिच
रेणुकापिहरेणौचजामदग्न्यस्यमातरि ४८ रोहकःप्रेतमे
देनारोढरित्रिषुविश्रुतः लंपाकोलंपटेदेशेलासकालास्य
कारिणि ४९ मयूरेलसकेचाथलूनकोभेदितेपशौ लो
चकोमांसपिंडेक्षितारकामांचकज्जले ५० ललाटाभर

कत्रि

णेस्त्रीणांकदलीनीलवस्त्रयोः निर्मुहोकर्णपूरेचमूर्व्यांभू
र्जत्वचर्मणि ५१ वस्ककंरोमकेपुंसिशिवमल्लार्कपर्णयोः
वर्णकश्चारणेस्त्रीतुचंदनेचविलेपने ५२ द्वयोर्नील्यादिषु
स्त्रीस्याद्गुत्कर्षैकथनस्यच वर्तकस्तुखुरेऽश्वस्यविहगे
वर्तकोद्वयोः ५३ वंचकस्तुखलेधूर्तेगृहबभ्रौचजंबुके
व्यलीकमप्रियाऽकार्यवैलक्ष्येष्वपिपीडने ५४ नानागरे
ऽथवाल्हीकंवाल्हीकंधीरहिंगुनोः द्वावेतौपुंसिदेशस्य
प्रभेदेतुरगांतरे ५५ वार्द्धकंवृद्धसंघातेवृद्धस्यभावकर्मणोः
वार्षिकंत्रायमाणायांक्लीबंवर्षाभवेत्रिषु ५६ बालकोऽ
स्त्रीपारिहार्येत्रिषुस्यादंगुरीयके वितर्कस्तुपुमानूहेसंश
येचनिगद्यते ५७ विपाकःपचनेस्वादेकर्मणोविसदृक्फ
ले विवेकःस्याज्जलद्रोण्यांपृथग्भावविचारयोः ५८ वृ
श्चिकश्चद्रुणेराशौशूककीटौषधीभिदोः वृषांकःशंकरेसा
धौभल्लातकमहल्लयोः ५९ वैजिकंशिग्रुतैलेस्याद्धेतौस
द्योंऽकुरेतुना शलाकाशल्यमदनशारिकाशल्लकीषुच ६०
छत्रादिकाष्ठीशरयोःशल्लकीपशुरक्षयोः शंबूकोगज
कुंभांतघोंगेचशूद्रतापसे ६१ जलजंतुविशेषेचशंबूकानन
पुंसकं शंबूका वलयेकंबावस्त्रीपुंसिशिरोरुजि ६२ शार्क
कःस्याद्दुग्धफेनशर्करापिंडयोःपुमान् शिंशुकःशिशुमा
रेस्याद्बालकोलूपिनोरपि ६३ शीतकःशीतकालेचसुस्थि
तेदीर्घसूत्रिणि शूलकःप्रावटेपिस्याद्रसेपिपरिकीर्तितः
६४ सस्यको मणिभेदेऽसौसंपर्कोमिलकेरतौ संपाक
स्तर्ककेधृष्टेत्रिषुनाचतुरंगुले ६५ स्यमीकानीलिकायां
स्त्रीस्यमीकोनाकुवृक्षयोः स्वस्तिकोमंगलद्रव्येचतु
ष्कगृहभेदयोः ६६ सरकोऽस्त्रीसीधुपानेशीधुपात्रेक्षु
सीधुनोः अछिन्नाऽध्वगपंक्तौचसायकःशरखड्गयोः ६७

स्यासकः पुंसिचार्चिक्येजलादेरपिबुद्बुदे सूचकः सी
वनद्रव्येबोधकेपिशुनेशुनि ६८ ओतौकाकेसूतकोऽस्त्री
पारदेनद्धयोर्जनौ सृदाकुर्नानिलेवज्नेज्वलनेप्रतिसूर्यके
६९ सेवकस्तुप्रसेवेनावाच्यलिंगोऽनुजीविनी सेचकः
स्यात्पुमान्मेघेवाच्यलिंगस्तुसेक्तरि ७० सैनिकः सैन्यरक्षे
चस्यात्सेनासमवेतके हारकः कितवेचौरेगद्यविज्ञानभेद
योः ७१ हुडुक्कोवाद्यभेदेचमत्तदात्यूहपक्षिणि हेरुको
बुद्धभेदेस्यान्महाकालगणेपिच ७२ कचतुःभवेदलिम
कोभेकेपिकेऽलोपद्मकेसरे मधूकेऽप्यथालिपकोभृंगको
किलकुक्कुरे ७३ अंगारकः कुजेऽपिस्याद्दुन्मूकांशेकुरं
टके भवेदंगारिकाचेक्षुकांडेकिंशुककोरके ७४ स्याद
श्मंतकसुद्दानेमल्लिकाछदनेपिच आकल्पकस्तमोमो
हग्रंथावुत्कलिकामुदोः ७५ आक्षेपकोऽनिलव्याधौव्या
धेनिंदाकरेपिच भवेदाखनिकश्चौरेसूकरेमूषकेपिच ७६
कथितोत्कलिकोत्कंठाहेलासलिलवीचिषु एडमूकोऽ
न्यलिंगः स्याच्छठेवाक्श्रुतिवर्जिते ७७ कठिल्लकस्तुप
र्णाशेवर्षाभूकारविल्लयोः कपर्दकोवराटेस्याज्जटाजूटे
चधूर्जटेः ७८ कर्कोटकःस्यान्मालूरकाद्रवेयप्रभेदऽ
योः कलविंकः पुमान्ग्रामचटकेपिकलिंगके ७९ कनी
निकातारकोऽस्यणःस्यात्कनिष्ठांगुलावपि कापटिकोऽन्यमर्म
ज्ञेछात्रेपुंसिशठेत्रिषु ८० काकरुकोनग्नदंभस्त्रीजितोलू
कभीरुषु निंबेकुरुबकः शोणाऽम्लानझिंटीप्रभेदयोः ८१
कुरंटकः पीतपुष्पाम्लानझिंटीकयोःपुमान् कृकवाकुर्म
यूरेपिसरटेचरणायुधे ८२ कोशातकःकठेपुंसिपटोल्यांघोष
केस्त्रियां अथकौक्कुटिकोदूरप्रेरिताक्षेचदांभिके ८३ कौ
लेयकः सारमेयेकुलीनेऽथखरालिकः ग्रामणीभेडिनारा

चेप्युपधानेचपुंस्ययं ८४ भवेद्गुणनिकानृत्यशून्यांकेपाठ॰
निश्चितौ गोकंटको गोक्षुरकेस्यप्रुटेचगवांखुरे ८५ गोमेद
कं पीतमणौकाकोलेपत्रके ऽपिच स्याद्गोकुलिकोवलिरेपंक
स्थगव्युपक्षके ८६ अथघर्घरिकाक्षुद्रघंटावादित्रदंडयोः ॥
चर्चरीको महाकालेकेशविन्यासशाकयोः ८७ चंडालिका
किंनरांयामुमायामोषधीभिदि अथचातुरकश्चक्रगंडौपुंस्य
भिधेयवत् ८८ गोचरेलोचनस्यापिचाटुकारेनियंतरि जर्ज
रीकं बहुछिद्रेजरातुरेपिवाच्यवत् ८९ जीवंतिकागुडू
च्यांचजीवाख्यशाकवंद्योः जैवातृकः पुमान्सोमेदीर्घायुः
कृशयोस्त्रिषु ९० तर्तरीकं बहित्रेस्यान्नद्योःपारगेत्रिषु
तिक्तशाकस्तुखदिरेवरुणेपत्रसुंदरे ९१ त्रिवर्णकं गो
क्षुरकेत्रिफलायांकटुत्रिके दूलाहकः स्वयंपाततिलेप्स्त्र्यां
वगैरिके ९२ फेनवातकयौनागकेसरेचमहत्तरे दंदशूक
स्तुपुल्लिंगोराक्षसेचसरीसृपे ९३ दासेरकस्तुकरभेदासीपु
त्रेचधीवरे नियामकः कर्णधारेपोतवाहेनियंतरि ९४ नि
श्चारकः पुरीषस्यक्षयेस्वैरेसमीरणे निर्ग्रंथकः स्यात्क्ष
पणेनिष्फलेप्यपरिच्छदे ९५ प्रचलाकः शराघातेशिखंडेच
भुजंगमे प्रकीर्णकं चामरेस्याद्विस्तारेनातुरंगमे ९६ पं
चालिकास्त्रियांवस्त्रपुत्रिकागीतिभेदयोः स्यात्पिप्पल
कं वक्षोजवृंतेसीवनसूत्रके ९७ पिंडीतकः स्यात्तगरेमद
नाख्यमहीरुहे अथपुष्कलको गंधमृगेक्षपणकीलयोः ॥
९८ पुंडरीकं सितांभोजेसितछत्रेचभेषजे पुंसिव्याघ्रेऽग्नि
दिङ्नागकोशकारांतरेपिच ९९ भवेत्पूर्णानकं वर्द्धापने
चपटहेपिच फर्फरीकस्त्वपेटेस्यात्फर्फरीकंतुमार्दवे ॥
२०० बलाहको गिरौमेघेदैत्यनागविशेषयोः वराटकः
पद्मबीजकोशेरज्जौकपर्दके १ वकेरुका वलाकाभिद् ॥

तावर्जितशाखयोः **वरंडक**स्तुमातंगवेद्यांयौवनकंटके २
वर्तुले**वाणिजको**ब्बाडवाग्नौवणिज्यपि **वृंदारकः**सुरे
पुंसिमनोज्ञश्रेष्ठयोस्त्रिषु ३ अथ**भ्रमरको**भृंगगिरिकेचाल
कांतरे **भट्टारको**नृपेनाट्यवाचादेवेतपोधने ४ **भयानकः**
स्मृतोव्याघ्रेरसेराहौभयंकरे **भार्यादिकः**पुमान्भार्यानिर्जि
तेहरिणांतरे ५ भवेन्म**रुबकः**पुष्पविशेषेमदनद्रुमे **मं**
**डोदकं**चित्तरागेक्लीबमातर्पणेपिच ६ भवेन्म**ंडलकं**बिंबे
कुष्ठभेदेचदर्पणे अथ**मर्कटकः**सस्यभेदेवानरलूतयोः ७
**मयूरको**प्यपामार्गेक्लीबतुत्थाजनेपुनः **माणवको**हारभे
देबालेकुपुरुषेपिच ८ **मृष्टरुको**वदान्येपिमिष्टाशिन्यतिथि
द्विषि **रतर्द्धिकं**स्याद्दिवसेसुखस्नानेष्टमंगले ९ **राधरंकः**
पुमान्सीरेसीरकेचघनोपले **लालाटिकः**प्रभोर्भावदर्शिन्या
श्लेषणांतरे १० कार्याक्षमेले**खनिकः**कथितोलेखहारके
लेखेषुपरहस्तेन ——— स्वहस्तस्यचलेखके ११ **वर्तरू**
**को**नदीभेदेकाकनीडेजलावटे **विनायक**स्तुहेरंबेतार्क्ष्यवि
घ्नेजिनेगुरौ १२ **वितुन्नक**स्तुधान्याकेझाटामल मयूरके
**विशेषको**ःस्त्रीतिलकेविशेषयितरित्रिषु १३ **विदूषक**
श्चाटुबटौपरनिंदाकरेऽपिच **वैनाशिकः**स्यात्क्षणिकेपर
तंत्रोर्णनाभयोः १४ **वैदेहको**वाणिजकेशूद्राद्वैश्यासुतेपि
च **वैतालिकः**पुमान्बौद्धितालेबोधकरेत्रिषु १५ **शतानीक**
स्तुवृद्धेस्यान्मणिराजप्रभेदयोः **शालावृकः**शृगालेस्यात्सारमे
येवलीमुखे १६ **शिलाटकः**पुमानट्टेबिलेपिपरिकीर्तितः **शृगा**
**लिका**शिवायांस्यात्त्रासादपिपलायने १७ **शृंगाटकं**भवेद्द्वा
रिकंटकेचचतुष्पथे **संतानिका**पिक्षीरादिसारेमर्कटजालके
१८ **संदंशिका**पिसुत्रुटीलोहयंत्रविशेषयो **संचारिका**तु
युगलेकुट्टनीघ्राणयोरपि १९ **संघाटिका**स्त्रियांयुग्मेकु

द्विन्यांजलकंटके सुप्रतीकः शोभनांगेभवेदीशानदिग्गजे २०
अथसैकतिकंमात्रयात्रामंगलसूत्रके नासन्यस्तेक्षपणके
त्रिषुसंदेहजीविनि २१ सोमवल्कस्तुधवलखदिरेकट्फले
पिच सौगंधिकंतुकल्हारेपद्मरागेपिकत्तृणे २२ पुल्लिंगोगंध
पाषाणेस्तुगंधव्यवहारिणि ॥ कपंच ॥ अनेडमूकमुद्दिष्टः
शठेवाक्श्रुतिवर्जिते २३ स्यादाच्छुरित कंहासनखराघातभे
दयोः उपकारिकोपकर्य्यांपिष्टभेदेनृपालये २४ कक्ष्यावे
क्षकइत्येपशुद्धोतोद्यानपालयोः रङ्गाजीवेकणेखंगेद्धाःस्थेः
थकटखादकः २५ खादकेकाचकलशेञ्चलिपुष्टेचजंबुके
कृमिकंटकंतुचित्रांगविडंगोदुंबरेषुच २६ गोजागरिकंमं
गलेपुंसिस्यात्कंटकारके चिल्लमीलिकातुकंठीभेदेखद्योत
विद्युतोः २७ अथोजलकरंकःस्यान्नालिकेरफलेऽम्बुजे
शंखेजलललतायांचवारिवाहेचकीर्तितः २८ जलताविकडूल्ली
सकाकेचीत्रषयोश्चपुंसिस्यात् नवफलीकास्त्रीनव्येनव
जातरजोंऽगनायांच २९ नागवारिकउद्दिष्टोराजकुंजरहस्ति
पेगणस्थराजगरुडेचित्रमेखलकेपिच ३० स्याद्वीहिराजिकः
कंगुधान्यचीनकधान्ययोः व्यवहारिकास्याल्लोकयात्रासं
मार्जनीगुदे ३१ शतपर्विकातुदूर्वायांवचायामपियोषिति
शीतचंपकइत्येषस्यादादर्पणदीपयोः ३२ स्तवसंतकउ
द्दिष्टोवासंत्यांमदनोत्सवे स्याद्धेमपुष्पिकासूथ्यांचंपकेहेम
पुष्पकः ३३ ॥ कषट् ॥ ग्रामसद्गुरिका ग्रामसुद्देस्पृगीझपे
स्त्रियां मदनशलाकाकामोद्दीपकेभेषज्यसारिकयोः ३४
मातुलपुत्रकइत्यपिमामकतनयेफलेचधूर्तस्य वर्णवि
लोडकएषश्लोकस्तेनेचसंधिचोरेच ३५ सिंदूरतिलक
उक्तोमतंगजेस्त्रीतुकामिन्यां ॥ ॥इतिकांतवर्गः खैकंसमिद्रिये
पुंसिस्त्रेभूम्न्येबिंदौविहायसि संवेदनेदेवलोकेकर्मण्यपिनपुंस

कं १ खद्विः ॥ नखीस्त्रीक्लीबयोः शुक्तौनखरेपुंनपुंसकं
त्सुखः सम्यङ्ज्ञानोद्गेचसाम्नः षट्प्रणवेषुच २ प्रेखापर्यट
नेप्यश्वगतौसंवेशनांतरे मुखंनिःसरणेवक्त्रेप्रारंभोपाययो
रपि ३ संध्यंतरेनाटकादेःशब्देपिचनपुंसके लेखोलेख्येसु
रेलेखालिपिराजिकयोर्मता ४ रिंखाश्वगतिभेदेपिमूकशिं
क्यांचनर्तने शंखःकंबौनयोषिन्नाभालास्थिनिधिभिन्नखे ५
शाखापक्षांतरेबाहौवेदभागद्रुमांगयोः शिखाशाखाबर्हिचू
डालांगलिक्यग्रमात्रके ६ चूडामात्रेशिखायांचज्वालायांप्र
पदेपिच सखामित्रेसहायेनावयस्यायांसखीमता ७ सुखं
शर्मणिनाकेचस्करवापुर्यांप्रचेतसः ॥ खत्रि ॥ गोमुखं
कुटिलागारेवाद्यभांडेचलेपने ८ पुंसिमातलिपुत्रेचमहादेव
गणांतरे त्रिशिखोराक्षसेक्लीबंत्रिशूलेमंडलांतरे ९ दुर्मु
खः कपिभिन्नागभिदोर्नामुखरेत्रिषु प्रमुखः प्रथमेश्रेष्ठेस
यूखः किरणेपिच १० ज्वालायामपिशोभायांविशिखस्तो
मरेशरे विशिखातुखनित्र्यांचरथ्यानलिकयोरपि ११ वि
शाखस्तर्ककेस्कंदेत्रियामृक्षेकविल्लुके वैशाखोमासभे
देःपिमंथानेचप्रकीर्तितः १२ स्कसुखस्ताक्ष्येतनयेशाखना
गत्रभेदयोः ॥ खचतुः ॥ भवेदग्निमुखोदेवविप्रेभल्लात
केस्त्रियां १३ अथाग्निशिखमुद्दिष्टंकुसुंभेकुंकुमेपिच ॥
लांगलिक्याख्यौषधौचविशिल्यायांचओषिति १४ इदुले
खाऽमृतासोमलताशशिकलासुच अथवह्निशिखास्त्री
स्यादुच्चटायांशिशोत्रिषु १५ महाशंखोमानुषास्थिसंख्या
भेदालिकेषुच भवेद्व्याघ्रनखंकंदेगंधद्रव्यविशेषयोः १६
नखक्षतांतरेक्लीबंशिलीमुखोऽलिकांडयोः शशिलेखा
कलाभागेगुडूचीवृत्तभेदयोः १७ भवेत्स्वस्तिमुखोलेखे
ब्राह्मणेवंदिनित्रिषु ॥ खपंच ॥ मलिनमुखःस्त्रीगो

लांगूलेपुंसित्रिषुक्रूरे १८ शीतमयूखश्चंद्रेघनसारेचापि पुल्लिंगः सर्वतोमुखउग्रेचक्षेत्रज्ञब्रह्मणोःपुमान् १९ नपुंसकेतुपानीयेसुखवर्त्मन्यपिस्मृतम्॥ ॥इतिखांतवर्गः॥

॥ गैकं ॥ गौःस्वर्गेचबलीवर्देरश्मौचकुलिशेपुमान् ॥ स्त्रीसौरभेयीदृग्बाणदिग्वाग्भूष्वप्सुभूम्निच १॥ गद्विः॥ अगःस्यान्नगवत्पृथ्वीधरपादपयोःपुमान् अंगंगात्रेप्रतीकोपाययोःपुंभूम्निनीवृति २ क्लीबेकत्वेत्वप्रधानेत्रिष्वंगवतिचांतिके इंगःस्यादद्भुतेज्ञानेजंगमेंगितयोरपि ३ खगःसूर्येग्रहेदेवमार्गणेचविहंगमे खड्गोगंडकशृंगासिबुद्धभेदेषुगंडके ४ गांगस्तुगंगासंभूतेत्रिषुभीष्मेगुहेपुमान् चंगस्तुशोभनेदक्षेटंगोरवस्त्रीस्यात्खनित्रके ५ खड्गभेदेचजंघायांस्यांगदानेचवर्जने तुंगोनिशावर्चवपोःपुन्नागनगयोःपुमान् ६ उन्नतेत्रिषुदुर्गामानील्योःस्त्रीदुर्गमेत्रिषु नागंनपुंसकंरंगेसीसकेकरणांतरे ७ नागःपन्नगमातंगक्रूराचारिषुतोयदे नागकेसरपुन्नागनागदंतकमुस्तके ८ देहानिलप्रभेदेचश्रेष्ठेस्यादुत्तरस्थितः पिंगागोरोचनाहिंगुनालिकाचंडिकासुच ९ पिंगोशस्यांपिशंगेनाबालकेतुनपुंसकं पूगस्तुक्रमुकेवृंदेफलसारेऽभिधेयवत् १० नदीभेदेमलप्वांस्त्रीभंगोजयविपर्यये भेदरोगतरंगेषुभंगास्यात्तरस्त्रियां ११ भगःश्रीयोनिवीर्येच्छाज्ञानवैराग्यकीर्तिषु माहात्म्यैश्वर्ययत्नेषुधर्मेमोक्षेचनारवौ १२ भागोरूपार्द्धकेभाग्यैकदेशयोर्भृगुःपुमान् मुनौहरेतटेशुक्रे भृंगोधूम्याटपिंगयोः १३ मधुव्रतेभृंगराजेपुंसिभृंगीगुडत्वचि ॥ भोगःसुखेधनेचाहेःशरीरफणयोरपि १४ पालनेव्यवहारेचयोषिदादिभृतावपि मार्गोमृगमदेमासप्रभेदेऽन्वेषणाध्वनोः १५ मृगःपशौकुरंगेचकरिनक्षत्रभेदयोः अन्वेषणे

चषाख्यायांमृगी तुवनितांतरे १६ युगो रथहलाद्यंगेनृद्ध्योस्तु
कृतादिषु युग्मेहस्तचतुष्केपिरद्धिनामौषधेःपि च १७ योगोऽपू
र्वार्थसंप्राप्तौसंगतिध्यानयुक्तिषु वपुःस्थैर्यप्रयोगेचविष्कंभादिषु
भेषजे १८ विश्रब्धघातकेद्रव्योपायसन्नहनेष्वपि कार्मणेपिचरं
गोनाशगेनृत्येरणक्षितौ १९ अस्त्रीत्रपुणिरागस्तुमात्सर्येलोहि
तादिषु क्लेशादावनुरागेचगांधारादौनृपेपिच २० रोगःकुष्ठौषधे
व्याधौलंगस्तुसंगषिड्गयोः लिंगंचिन्हेऽनुमानेचसांख्योक्तप्रकृ
तावपि २१ शिवमूर्तिविशेषेपिमेहनेपिनपुंसक व्यंगोभेके
चहीनांगेवंगंसीसकरंगयोः २२ वार्ताकेपिचकार्पासेपुंभूम्नि
नीवृदंतरे वल्गुःस्याच्छगलेपुंसिसुंदरेचाभिधेयवत् २३ वेगो
जवेप्रवाहेचमहाकालफलेपिच शार्ङ्गःकार्मुकमात्रेपिविष्णोर
पिशरासने २४ शृंगो वटाम्रातकयोःपर्कट्यामपिचास्त्रियाम्
शृंगंप्रभुत्वेशिखरेचिन्हेक्रीडांबुयंत्रके २५ विषाणोत्कर्षयो
श्चाथशृंगःस्यात्कूर्चशीर्षके स्त्रीविषायांस्वर्णमीनभेदयोर्ऋ
षभौषधौ २६ सर्गस्तुनिश्चयाध्यायमोहोत्साहात्मसृष्टिषु ॥ ॥
॥गत्रिः॥अयोगोविधुरेकूटेविश्लेषेकठिनोद्यमे २७ अनंगो
मदनेनंगमाकाशमनसोरपि अपांगस्त्वंगहीनेस्यान्नेत्रांतेतिल
केपिच २८ आभोगोवरुणछत्रेपूर्णतायत्नयोरपि आयोगो
व्यापृतौगंधमाल्योपहारबोधयोः २९ आशुगोमारुतेबाणे
स्युद्वेगःक्रमुकीफले उद्वेगोप्युद्धाहुलकोद्वेजनोद्गमनेषुच ३०
उत्सर्गःपुंसिसामान्येन्यायेचत्यागदानयोः कलिंगःपूतिकरजे
धूम्याटेभूम्निनीवृति ३१ नद्योःकौटजफलेमहिलायांतुयोषि
ति कालिंगो भूमिकर्कारौदंतावलभुजंगयोः ३२ कालिंगी
राजकर्कट्यांचक्रांगोमानसौकसि चक्रांगीकटुरोहिण्यांजि
ह्मगोःहौच्चमंदगे ३३ तडागोऽस्त्रीजलाधारविशेषेयंत्रकू
टके तातगुःक्षुद्रतातेनाजनकस्यहितेत्रिषु ३४ त्रिवर्गोध

र्मकामार्थेस्त्रिफलायांकटुत्रिके वृद्धिस्थानक्षयेसत्वरजस्त
मसिचेष्यते ३५ तुरगी चाश्वगंधायांतुरग श्चित्तवाजिनोः
धारांगोऽसोचतीर्थेचनरांग स्तुवरंडके ३६ मेढ्ननेनद्वयोश्चा
थनारंगः पिप्पलीरसे यमजप्राणिनिविटेनागरंगद्रुमेऽपिच
३७ निषंगःसंगतेतूणेनिसर्गारूपसर्गयोः नीलगुःस्यात्कृ
मौपुंसिभस्मराल्यांतुयोषिति ३८ पत्रांग नद्वयोर्भूर्जेपद्मकेरक्त
चंदने प्लवग श्चौषधीभेदेतथेलपवनाशने ३९ प्लवगो वानरेभे
केसारथ्योचोष्णदीधितेः परागःसुमनोरेणौधूलिस्नानीययोरपि ४०
गिरिप्रभेदेविख्याताबुपरागेचचंदने प्रयाग स्तीर्थभेदेस्यायज्ञेश
तमखवाश्वयोः ४१ प्रयोगःकर्मणिऽपिस्यात्प्रयुक्तौचनिदर्शने पतं
गःशलभेशालिप्रभेदेपक्षिसूर्ययोः ४२ क्लीबंसुतेप्रियंगुःस्त्रीरा
जिकाकणयोरपि फलिन्यांकेगुसस्येचपुन्नाग स्तुसितोत्पले ४३
जातीफलेनरश्रेष्ठेपांडुनागेद्रुमं वरे वरांग योनिमातंगमस्तकेषु
गुडत्वचि ४४ भुजंगो [illegible] मातंगःश्वपचेगजे मृदंगः
पटहेघोषेरक्तांगस्तुमहीसुते ४५ कंपिल्लेस्त्रीतुजीवंत्यांक्लीबं
विद्रुमधीरयोः रथाङ्गं नद्वयोश्चक्रेनाच क्रांगविहंगमे ४६
वातिगःपुंसिभंटाक्यांधातुवादिनिचान्यवत् विडंग स्त्रिष्व
भिज्ञेस्यात्कृमिघ्नेपुन्नपुंसकं ४७ विसर्ग स्तुपुमान्दानेत्या
गेन्चमलनिर्गमे विसर्जनीयेप्ययनभेदेपिचविभावसोः ४८
विहंग स्तुत्रिलिंगःस्यादाशुगेचविहंगमे सर्वगं सलिलेक्ली
बंसर्वगः शंकरेविभौ ४९ संभोगस्तुपुमान्भोगेसुरते
जिनशासने सारंगःपुंसिहरिणेचातकेन्चमतंगजे ५०
शबलेत्रिषुद्वेमांगो गरुडेपरमेष्ठिनि॥ ॥ गचतुः॥ ॥
॥ स्यादपवर्गस्त्यागेमोक्षेकार्यावसानसाफल्ये ५१ ॥
अभिषंगोनपुंलिंगः पराभवाक्रोशशपथेषु ईहामृग
स्तुपुंसिस्यात्कोकरूपकभेदयोः ५२ ॥ ॥ ॥

५२ उपरागस्तुपुंसिस्याद्राहुग्रस्तार्केचंद्रयोः दुर्नयेग्रहकल्लोलेव्यसनेपिनिगद्यते ५३ उपसर्गःपुमान्रोगभेदोपप्लवयोरपि कटभंगस्तुशस्यानाहस्तच्छेदेनृपात्ययते ५४ छत्रभंगोःपिवैधव्येस्वातंत्र्यनृपनाशयोः दीर्घाध्वगःपुमानुष्ट्रेलेख्यहारेतुभेद्यवत् ५५ मल्लनागोःभ्रमातंगेवात्स्यायनमुनावपि समायोगस्तुसंयोगेसमवायेप्रयोजने ५६ संप्रयोगोरतेपिस्याद्न्वितौकार्मणेपिच॥ ॥गपंच॥ ॥कथाप्रसंगोवातूलेविषवैद्येचवाच्यवत् ५७ नाडीतरंगः काकोलेहिंडकेरतहिंडके इतिगांतवर्गः ॥घैकं॥ घोघंटायांघर्घरेनास्त्रियातुकांचिघातयो.॥ ॥घद्विः ॥अघंतुव्यसनेदुःखेदुरितेचनपुंसकं १ अर्घःपूजाविधौमूल्येप्युहःस्याद्दृजानिले अगौहस्तपुटेशस्तेप्योघोवेगेजलस्यच २ वृंदेपरंपरायांचद्रुतंन्त्योपदेशयोः मघामघीचनक्षत्रेःधान्यभेदेयथाक्रमं ३ मघोद्वीपांतरेमेघोमुस्ताजलदयोःपुमान् मोघास्त्रीपाटलायांस्याद्धीननिष्फलयोस्त्रिषु ४ लघुस्पृगुरौचमनोज्ञेनिःसारेवाच्यवत्क्लीवं शीघ्रेचकृष्णागुरुणिपृक्कानामौषधौतुस्त्री ५ श्लाघास्त्रियांप्रशंसायांपरिचर्याभिलाषयोः॥घत्रिः अनघोनिर्मलापापमनोज्ञेष्वभिधेयवत् ६ अमोघंसफलेवाच्यवत्स्त्रीपथ्याविडंगयोः उल्लाघोपिशुचौदक्षेदक्षनीरोगयोस्त्रिषु ७ काचिघःकांचनेपिस्यात्छेमंडेमूषकेपिच निदाघोग्रीष्मकालेस्यादुष्णस्वेदांबुनोरपि ८ परिघःकाचकलशेघटेप्राकारगोपुरे परिघोयोगभेदःस्त्रविशेषेर्गलघातयोः ९ प्रतिघःप्रतिघातेस्यात्क्रोधेपिपरिकीर्तितः महार्घस्तुमहामूल्येत्रिपुस्याल्लावकेपुमान् १० सर्वौघोगुरुभेदेचसर्वसन्नहनेपुमान्॥ इतिघांतवर्गः ॥ङैकं॥ ङःपुमान्विषयेख्यातःस्पृहायांविषये

स्यच ॥ इति डांतवर्गः ॥ चैकं ॥ चन्द्रं देशे पुमानुक्तः कच्छ पेचंद्रचौरयोः चद्धिः अर्चा पूजाप्रतिमयोः कचः केशेगुरोः सुते १ बंधेशुष्कव्रणेपुंसिकरिण्यांतु कचा स्त्रियां काचः शिक्येमणौनेत्ररोगभेदेमृदंतरे २ काची स्यान्मेखलादाम्नि अभेदेनगरस्यच कूर्चमस्त्री भ्रुवोर्मध्येकठिनश्मश्रुकैतवे ३ क्रौंचो द्वीपविशेषेस्यात्पक्षिपर्वतभेदयोः चर्चा चिंतास्था सकयोश्चर्चिकायांतुयोषिति ४ चंचातुनलनिर्माणेतृणनि र्मितपूरुषे चंचू स्त्रोटयांस्त्रियापुंसिगोनाडीकेव्यडंबके ५ त्वक्स्त्रीचमेणिवल्केचगुडत्वचिविशेषतः न्यङ्गीचनिम्न योनीचःपामरेवामनेपिच ६ प्राच्छंदोदिशिदेशेचकालेच वाच्यलिंगकः पिचुर्नाकुष्टभेदेचकर्षेतूलेसुरांतरे ७ मोचः शोभांजनेपुंसिमोचा शाल्मलिरंभयोः रुचिः स्त्रीदीप्तौशोभाया मभिष्वंगाभिलाषयोः ८ रुक्स्त्रीशोभाद्युती छासुवचःकीरेच चौषधौ शारीकायांचवाग्वाचभारत्यांवचनेस्त्रियो ९ वीचिः स्वल्पतरंगेस्यादवकाशेसुखेद्रुयोः शचीद्राण्यांशतावर्यांत थास्त्रीकरणांतरे १० शुचिर्ग्रीष्माग्निशृंगारेष्वाषाढेशुद्धमंत्रि णि ज्येष्टचपुंसिधवलेशुद्धेनुपहतेत्रिषु ११ सूचीतुसीवनद्र व्यव्यधनिकाभिनयांतरे ॥ ॥चत्रि ॥ ॥ उदग्दिग्देशकाले पुवाच्यवत्रितयेऽव्ययं १२ कणीचीपुष्पितलतागुंजयोःशक टस्त्रियां कवचोगर्दभांडेचसन्नाहेपटहेपिच १३ क्रकचः करपत्रेऽस्त्रीग्रंथिलाख्यतरौपुमान् नमुचिस्तुपुमान्दैत्यभेदे कुसुमकार्मुके १४ नाराची एषणिकायांनालोदवाणांबुहस्ति नोः प्रपंचःसंचयेपिस्याद्विस्तारेचप्रतारणे १५ प्रत्यग्दिग्दे शकालेपुवाच्यवत्रितयेऽव्ययं मरीचिर्मुनिभेदेनागभस्तावन पुंसकम् १६ मारीचोरक्षसोभेदेकक्कोलेयाजकद्विजे मारीची देवताभेदेविपंची केलिवीणयोः १७ विकचःक्षपणकेतौनाऽके

शेस्फुटितेऽन्यवत् विरिचिर्नाविरिंचश्चवैकुंठपरमेष्ठिनि १८
संकोचोमीनभेदेस्यात्वधे क्लीबंतुकुंकुमे सम्यक्स्याद्वाच्य
लिंगंतुमनोज्ञेसंगतोपिच १९ ॥ चचतुः ॥ जलसूचिःकंक
त्रोटिमत्स्यशृंगाटयोरपि शिशुमारेचपुल्लिंगोजलोकायांतुयो॰
षिति २० मलिम्लुचोमासभेदेचौरज्वलनयोःपुमान् ॥ चपं
च ॥ रतनारीचोनारीणांसीत्कारेचसुनिस्मरे २१ इतिचांत
वर्गः॥ ॥ छैकं ॥ छाछादनेस्त्रियांख्यातानिर्मलेन्यवदिष्यते॥
॥ ॥ छद्विः ॥ अच्छःस्फटिकभल्लूकनिर्मलेष्वच्छमव्ययम्
१ आभिमुख्येऽथकच्छःस्यादनूपेतुन्नकद्रुमे नौकांगेपुंसिवारा
ह्यांचीरिकायांचयोषिति २ स्याद्गुच्छःस्तवकेस्तंबेहारभेदक
लापयोः पिच्छापूगजटाकोशमोचाशाल्मलिवेष्टके ३ भक्त॰
सभूतमंडेचपंक्तावश्वपदामये स्त्रियांपुंसितुलांगूलेनद्वयोर्बर्हे
चूडयोः ४ पुच्छःपश्चात्प्रदेशेस्याल्लांगूलेपुच्छमिष्यते म्लेच्छः
पामरभेदेचपापरक्तेऽपभाषणे ५ ॥ ॥ छचतुः ॥ महाकच्छ
स्तुपुंसिस्यात्समुद्रेचप्रचेतसि ॥ इतिछांतवर्गः॥ जैकं जोना
मृत्युजयेजन्यांतातमात्रेजनार्दने जूस्त्वरागमनेप्रोक्तासामा
न्यगमनेस्त्रियाम् १ जूराकाशसरस्वत्योःपिशाच्यांजवनेऽ
स्त्रियाम् ॥ ॥ जद्विः ॥ अजश्छागेहरिब्रह्मविधुस्मरनृपेहरे
अब्जोस्त्रीशंखेनानिचुलेधन्वन्तरौचहिमकिरणे क्लीबपद्मेः
थाजिःस्त्रीसमभूमौचसंग्रामे ३ ऊर्जस्तुकार्त्तिकोत्साहबले
षुप्राणनेपिच कंजःकेशेविरिंचेत्रकजंपीयूषपद्मयोः ४
कुजाकात्यायनीदेव्यांकुजो नरकभौमयोः कुब्जोरसप्रभे
देनान्युब्जेस्याद्वाच्यलिंगकः ५ कुंजोऽस्त्रियांनिकुंजेपिहनौ
दंतेपिहस्तिनः खंजाछंदःप्रभेदेस्त्रीकुटिलांघ्रौतुवाच्यवत् ६
खजामंथेप्रहस्तेऽथखजुःकीटांतरेस्मृताखर्जूरीपादपेकंडूंग
जोमानेमतंगजे ७ वास्तुनस्थानभेदेपिगंजाखनौसुराग्रहे

जांतं

गंजः स्यात्पुंसि रीढायां भांडागारे तु न स्त्रियां ८ गुंजा तु का कचिंचायां पटहे च कलध्वनौ द्विजः स्याद्ब्राह्मणक्षत्रवैश्यदंतां डजेषु ना ९ द्विजा भार्गीहरेण्वोश्च ध्वजः स्याच्छौंडिके पुमान् न स्त्रियां तु पताकायां खट्वांगे मेढ्रचिन्हयोः १० निजं स्वीये च नित्ये च न्युब्जो दर्भमयस्रुचि कर्मरंगफले क्लीवं कुब्जाधोमुखयोस्त्रिषु ११ प्रजा लोके च संताने पिंजा तूलहरिद्रयोः बले क्लीबं वधे पुंसि व्याकुले त्रिष्वथो भुजा १२ द्वयोर्बाहौ करे मज्जं स्त्री शुंठ्यां धावके पिच रजो रणौ परागे स्यादार्तवे च गुणांतरे १३ रज्जुर्वेण्यां गुणे योषिद्राजिः स्त्री पंक्तिलेखयोः रुजा रोगे च भंगे ऽथ लाजः स्यादार्द्रतंडुले १४ नपुंसकमुशीरे ऽथ स्त्रियां पुंभूम्नि चाक्षते व्रजो गोष्ठाध्ववृंदेषु वाजो निःस्वनपक्षयोः १५ वेगे पुमानथ क्लीबे घृतयज्ञान्नवारिषु व्याजः शाठ्ये ऽपदेशे ऽथ बीजमंकुरकारणे १६ हेतुतत्वाधानशुक्रे सर्जुर्वणिजि विद्युति स्त्रियां स्वंजो विधौ रुद्रे स्वजः प्रस्वेदपुत्रयोः १७ क्लीबं रक्ते ऽथ सेजः स्यात्सन्नद्धे संभृते त्रिषु॥ जत्रि॥ अंडजा मृगनाभौ स्यात्सरटे ऽहौ खगे झषे १८ अंगजं रुधिरे ऽनंगकेशपुत्रगदेषु ना अंबुजो निचुले पुंसि कमले तु नपुंसकम् १९ असृक् स्याद्योगभेदे नारक्ते ऽपि स्यान्नपुंसकम् कंबोजो हस्तिभेदे ऽपि शंखदेशविशेषयोः २० करजस्स्याद्व्याघ्रनखे करंजनखयोः पुमान् कारुजः शिल्पिनां चित्रे वा मलूरे गजार्भके २१ कांबोजोऽश्वांतरे सोमवल्के पुन्नागपादपे कांबोजी माषपर्ण्यां च वलक्षखदिरे स्त्रियां २२ कुटजो वृक्षभेदे स्यादगस्त्यद्रोणयोरपि गिरिजं त्वभ्रके ऽपि स्याच्छिलाजतुनि शैलजे २३ लोहे ऽपि गिरिजा गौरीमातुलुंग्योश्च योषिति जलजं कमले शंखे नीरजं कुष्ठपद्मयोः २४ पटजस्तैलयंत्रे स्याच्छुरिकाफलके ऽपि नयोः वलजं गोपुरक्षेत्रे शस्यसंगरयोरपि २५ वलजा वर

योषायांपृथ्व्यामथवणिक्स्त्रियांवणिज्यायांपुमान्वाणिज्यके
चकरणांतरे २६ बाहुजःक्षत्रियेकीरेस्वयजातंतिलेष्वि भू
मिजोनरकेंगारेसीतादेव्यांतुभूमिजा २७ वनजामुद्गप
र्ण्यांनामुस्तकेक्लीवमंबुजे सहजस्तुनिसर्गेनासहोत्थेपुनर
न्यवत् २८ समजःपशुवृंदेनाविपिनेतुनपुंसकं सामज
स्तुगजेपुंसिसामोत्थेपुनरन्यवत् २९ हिमजातुशचीगौर्योः
पुंसिमैनाकपर्वते ॥ जचतुः ॥ अहिभुग्बर्हिणेताक्ष्र्येपुंसि
काश्मीरजंपुनः ३० कुष्ठकुंकुमयोःक्लीबेतिविषायांतुयोषिति
क्षीराब्धिजंतुसामुद्रलवणेमौक्तिकेपिच ३१ पुमांस्तुपारकि
रणेकमलायांतुयोषिति ग्रहराजोरवौचंद्रेजघन्यजःकनीय
सि ३२ वृषलेद्विजराजस्तुचंद्रेऽनंतेगरुत्मति धर्मराजोयमे
बुद्धेयुधिष्ठिरनृपेपुमान् ३३ भरद्वाजोगुरोःपुत्रेन्याघ्राटाख्य
विहंगमे भारद्वाजावनकार्पास्यांनाद्रोणऋषिभेदयोः ३४ अ
थभृंगराजउक्तःपक्षिविशेषंचमार्कवेभ्रमरे यक्षराट्पुंसि
धनदेमल्लानांरंगचत्वरे ३५ राजराजःकुबेरेपिसार्वभौमे
सुधाकरे॥ ॥जपंच॥ ॥ऋषभध्वजएषोपिशंकरेचार्ह
दंतरे ३६ मुनिभेषजमागस्त्यहरीतक्याचलंघने ॥ इतिजां
तवर्गः ॥ झैकं ॥ झोझ्झटीशेसुरगुरौदैत्यराजेध्वनावपि ॥
झद्वि ॥ झंझावातेतारवायोर्नष्टेपिकीर्त्यतेबुधैः झंझाध्वनि
विशेषेचस्यादंबुकणवर्षणे ॥इतिझांतवर्गः ॥ ञैकं ॥
ञःपुमान्स्याद्बलीवर्देसुकेचामभतावपि ज्ञोब्रह्मबुधविद्व
त्सुस्यादज्ञोजडमूर्खयोः १ प्रज्ञस्तुपंडितेवाच्यलिंगोबुधोच
योषिति राज्ञीराजप्रियायांचभार्यायांभास्करस्यच २ ॥संज्ञा
नामनिगायत्र्यांचेतनारवियोषितोः अर्थस्यसूचनायांचहस्ता
द्यैरपियोषिति ३ ॥ञत्रि ॥ कृतज्ञःकुक्कुरेपुंसिमर्यादि
न्यभिधेयवत् क्षेत्रज्ञआत्मनिछेकेदैवज्ञोगणकेपुमान् ४

देवज्ञेक्षणिकायांस्त्रीसर्वज्ञः शिवबुद्धयोः ॥ इति ज्ञान्तवर्गः ॥ ॥टैकं॥ टः पुमान्वामनेपादेनिःस्वनेपिक्वचिन्मतः ॥ ॥ टद्वि॥ ॥अट्टंभक्तेचशुष्केनाक्षौमेःत्यर्थेगृहांतरे १ इष्टमाशंसितेपिस्यात्पूजितेप्रेयसित्रिषु सप्ततंतौपुमान्क्लीवेसंस्कारेक्रतुकर्मणि २ इष्टिर्मताभिलाषेपिसंग्रहश्लोकयागयोः कटः श्रोणौद्वयोःपुंसिकिलिंजेःतिशयेशिरे ३ समयेगजगंडेचपिप्पल्यांतुकटीमता कटुस्त्रीकटुरोहिण्यांलताराजिकयोरपि ४ नपुंसकमकार्येस्यात्पुल्लिंगेरसमात्रके त्रिषुतद्वत्सुगंध्योश्चमत्सरेपिखरेपिच ५ कष्टंतुगहनेकृच्छ्रेकुष्टरोदनरावयोः कुटःकोटेपुमानस्त्रीघटेस्त्रीपुंसयोर्गृहे ६ कुटीस्यात्कुंभदास्यांचमुरायांचित्रगुच्छके कूटोःस्त्रीनिश्चलेराशौलोहमुद्गरदंभयोः ७ मायाद्रिशृंगयोस्तुच्छेसीरावयवयंत्रयोः अनृतेचाथकृष्टिःस्यादाकर्षेस्त्रीबुधेपुमान् ८ कोटिःस्त्रीधनुषोःग्रेःश्रौसंख्याभेदप्रकर्षयोः खटोधकूपकफयोःप्रहारान्तरटंकयोः ९ खाटिस्त्वसक्रहेपिस्यात्किणेशवरथेस्त्रियां खेटःकफेग्रामभेदेचर्मण्यस्त्यधर्वतित्रिषु १० अथगृष्टिःसकृत्सूतगवीवदर्योस्त्रियाम् घटःसमाधिभेदेभशिरःकूटकुटेषुच ११ घटाघटनगोष्ठीभघटनासुचयोषिति घृष्टिःस्त्रीघर्षणस्यद्बौविष्णुक्रांतासुनाकिरो १२ घोटा तुवदरीपूगवृक्षयोरपियोषिति चटुश्चाटौपिचिंडेचव्रतिनामासनेपुमान् १३ जटालग्नकचेमूलेमांस्यांप्लक्षेपुनर्जटी जुष्टंतुक्लीबमुच्छिष्टेसेवितेवाच्यलिंगकं १४ झाटोनिकुंजेकांतारेव्रणादीनांचमार्जने तटंनपुंसकंक्षेत्रेप्रतीरेतुतटीत्रिषु १५ त्वष्टापुमान्देवशिल्पितक्ष्णोरादित्यभिद्यपि त्रुटिःस्त्रीसंशयेस्वल्पेसूक्ष्मैलाकालमानयोः १६ त्रोटिःस्त्रीकटफलेचंचांखगेमीनांतरेःपिच दिष्टंदैवेपुमान्कालेदिष्टिर्मुत्परिमाणयोः १७

स्त्रियांदृष्टिस्त्रियांबुद्धौलोचनेदर्शनेपिच **धटो**दिव्यतुलायांस्या
**द्धुटी** चीरेचवाससः १८ **नटो**नल्यौषधेस्त्रीस्यात्शैलूषाशो
कयोःपुमान् **पटस्त्रि**त्रपटेवस्त्रेःस्त्रीप्रियालद्रुमेपुमान् १९ **प**
**टुर्द**क्षेचनीरोगेचतुरेप्यभिधेयवत् पटोलेतुपुमान्क्लीबेछत्राल
वणयोरपि २० **पट्टः**पेषणपाषाणेव्रणादीनांचबंधने चतुष्पथे
चराजादिशासनांतरपीठयोः २१ **पटिः**स्त्रीपटभेदेस्याद्वागुलो
कुंभिकाद्रुमे **पुष्टिः**स्त्रीपोषणेरद्धौफटातुफणदंतयोः २२ **व**
**टी**त्रिषुगुणेपुंसिस्यान्न्यग्रोधकपर्दयोः भटःस्यात्पुंसिवीरेचवि
शेषेपामरस्यच २३ **भृष्टिः**स्याद्भर्जनेशून्यवाटिकायांचयोषि
ति **म्लिष्टं**त्रिष्वव्यक्तवाचिम्लानेमुष्टिर्द्वयोःफले २४ **बद्ध**
पाणौत्सरौ**यष्टिः**पुंसिस्याद्भुजदंडके द्वयोर्हारलताभार्ग्योर्मधु
काशस्त्रभेदयोः २५ **रिष्टं** क्षेमाशुभाभावेपुंसिखड्गेचफेनि
ले **रिष्टिः** खड्गेनाशुभेस्त्रीलाटोदेशांतरेशुके २६ **वाटो** मा
र्गेवृत्तिस्थानेस्यात्कुटीवास्तुनोःस्त्रियां **विटो**ऽद्रौलवणेपिङ्गेमू
षिकेखदिरेपिच २७ **विष्टिः**स्त्रीषुकर्मकरेस्त्र्याजूवेतनकर्मसु
**व्युष्टिः**फलेसमृद्धौस्त्रीव्युष्टंकल्पेत्रिषूषिते २८ **सटा** जटाके
सरयोस्**स्फुटो**व्यक्तप्रफुल्लयोः व्याप्तेत्रिषु**स्फुटि**र्योपित्पादस्फोटा
मयेपिच २९ निर्भिन्नकर्कटीशस्येःपिस्यात्**सृष्टं**तुनिर्मिते 'यु
क्तनिश्चितयोःप्राज्येत्रिषु**सृष्टि**स्तुनिर्मितौ ३० स्वभावेचापिक
थिता **हृष्टो**रोमांचितेपिच जातहर्षप्रहसितेविस्मितेप्यभिधेयव
त् ३१ टत्रि ॥**अवटः** स्यात्त्रिलेगर्तेकूपेकुहकजीविनि **अरिष्टो**
रसुनेनिंबेफेनिलेकाककंकयोः ३२ **अरिष्ट**मशुभेतक्रेसूतिका
गारभासवे शुभेमरणचिन्हेचाः**दिष्ट**मादेशितेत्रिषु ३३ आक्रंसो
च्चिष्टयोःक्लीबमुत्कटस्तीव्रमत्तयोः **उद्भटः** कच्छपेशूर्पेकर्कटो
विहगांतरे ३४ राशिभेदेकुलीरेचवालुक्यांशाल्मलीफले **क**
**र्कटः** करहाटेस्यात्पंकपंकारयोरपि ३५ **करटो** गजगंडेस्या

त्कुसुंभेनिंद्यजीवने एकादशाहादिश्राद्धेरुदुरुरूढेपिवायसे ३६ **करटो** वाद्यभेदेथ **कार्पटो** जंतुकार्थिणोः **कीकटः** कृपणेनिःस्वेत्रिषुपुंभून्मिनिर्वृत्ति ३७ **कुरुंटो** दारुपुत्र्यांनाङ्गिंटीम्लानप्रभेदयोः **कुक्कुटश्च** कृतचर्यायांपुंसिस्याच्चरणायुधे ३८ निषादशूद्रयोःपुत्रेतृणोल्कायांचकुक्कुभे **कुनटी** मनःशिलायांनेपाल्यामपियोषिति ३९ **कृपीट** मुदरेतोयेकेशटोहर्यजोत्कटे **चर्पटः** स्फारविपुलेचपेटेपर्पटेपिच ४० **चक्राटो** विषवैद्येपिधूर्तदीनारयोरपि **चिपिटः** खाद्यभेदेनात्रिषुपिट्टितविस्तृते ४१ **चिरिंटी** तुसुवासिन्यांस्याद्वितीयवयःस्त्रियां **जकुटं** वार्त्ताकुपुष्पे **जकुटो** मलयेशुनि ४२ **त्र्यंकटं** शिक्यभेदेपिधौतांजन्यांचनद्वयोः **त्रिकूटं** सिंधुलवणे **त्रिकूटः** पर्वतांतरे ४३ **त्रिपुटा** मल्लिकायांचसूक्ष्मैलात्रिवृतोःस्त्रियां सतीनकेचतीरेच **त्रिपुटः** समुदाहृतः ४४ **द्रोहाटः** कथितोगाथाप्रभेदेमृगलुब्धके वैडालव्रतिकेचाथ **धाराट** श्चातकाश्वयोः ४५ **निर्टट** स्तुदयाशून्येकथितोनिष्प्रयोजने परापवादरक्तेचवाच्यलिंगोयमिष्यते ४६ **निष्कुट** स्तुगृहोद्याने स्यात्केदारकपाटयोः ॥ **पर्कटी** नूतनफलेपूगादेःप्लक्षपादपे ४७ **परीष्टिः** परिचर्यायांप्राकाम्येन्वेषणेस्त्रियां **पर्पटं** पिष्टभेदेस्यात् **पर्पटो** भेषजांतरे ४८ **पात्रटः** कर्परेपुंसिदेशेस्यादभिधेयवत् **पिच्चटो** नेत्ररोगेस्यात्क्लीबंसीसकरंगयोः ४९ **वरटा** द्वयोर्वरटयांस्त्रीहंस्यांचतस्यतौपुमान् **बर्बटी** पण्ययोषायांव्रीहिभेदेचयोषिति ५० **वैकटः** स्याद्वैकटिकेमत्स्यभेदेचपूनिच **भावाटो** भावकेसाधुनिवेशेकामुकेनटे ५१ **भाकूटः** शैलझषयोर्भेदेस्यादथ **मर्कटी** करंजभिच्छूकशिंव्योःपुंसिवानरलूतयोः ५२ **मोचाटः** कृष्णजीरेचरंभास्त्रिमलयोद्भवे **मोरटं** तुभवेदिक्षुमूलांकोठप्रसूनयोः ५३ सप्तरात्रात्परक्षीरेमूर्विकायांतु **मोरटा** **लर्णाटो** गायनेचित्रकरेस्त्रीरुतजीवने ५४

विकटा वज्रवाराह्यांत्रिपूरुविकरालयोः शाकटं शकटस्येदमित्यर्थे तस्यबोढरि ५५ शैलाटो देवलोसिंहेशुक्लकाचकिरातयोः संसृष्टं त्रिषुसंसर्गे संशुद्धे वसनादिना ५६ टचतुः॥ ॥उद्विंगटस्तृणगडमत्स्येकोपनपूरुषे करहाटः शिफाकंदेपद्मस्यमदनद्रुमे ५७ स्यात्कार्यपुटः कृपणोन्मत्तानर्थकरेषुच कामकूटस्तुवेश्यायाप्रियविभ्रमयोःपुमान् ५८ कुटन्नटंतुकैवर्तीमुस्तकेपुंसिशोणके कुंडकीटस्तुचार्वाकवचनाश्मिन्नपूरुषे ५९ पतितब्राह्मणीपुत्रदासीकामुकयोरपि खड्गरीटस्तु फलकासिधाराव्रतधारिणोः ६० गाढमुष्टिः कृपणेनाकृपणेत्वभिधेयवत् चक्रवाटः क्रियारोहेपर्य्यंतेचशिखातरौ ६१ चतुःषष्टिः कलासंख्याभेदयोर्बह्वृचिस्त्रियां नारकीटोश्मकीटेस्यात्स्वदत्ताशाविहंतरि ६२ परपुष्टः परभृतेवारनार्यांतुयोषिति प्रतिकृष्टं मतंगुह्येद्विराकृत्याचकर्षिते ६३ प्रतिसृष्टः प्रेषितेस्यात्प्रत्याख्यानेचवाच्यवत् वर्क्कराटो कटाक्षेस्यात्तरुणादित्यरोचिषि ६४ नारीपयोधरोत्संगकांतदंतनखक्षते शिपिविष्टस्तुखलतौशिवेदुश्चर्मणिस्मृतः ६५ अथश्रुतिकटः प्रायश्चित्ते ह्येपापशोधने ॥टपंच॥ दशनोच्छिष्टः पुंसिस्यान्निश्वासाधरचुंबयोः ६६ ॥इतिटांतवर्गः॥ठेकं॥ ठो मंडले चंद्रबिंबेशून्येचलोकगोचरे॥ठद्वि॥ कठो मुनौतदाख्यातवेदाध्येतृद्वयोः स्वरे १ कंठो गलेसन्निधानेध्वनौमदनपादपे काष्ठा दारुहरिद्रायांकालमानप्रकर्षयोः २ स्थानमात्रेदिशिचस्त्रीदारुणिस्यान्नपुंसकं कुष्ठं रोगेपुष्करेऽस्त्री कुंठो कर्मण्यमूर्खयोः ३ कोष्ठः कुसूलेचात्मीयेमध्येकुक्षौगृहस्यच गोष्ठं गोस्थानके गोष्ठी सभासंलापयोः स्त्रियां ४ ज्येष्ठः श्रेष्ठेऽतिवृद्धेचत्रिषुमासांतरेपुमान् ज्येष्ठा तुगृहगोधाख्यजंतुनक्षत्रभेदयोः ५ निष्ठा निष्पत्तिनाशांतयाच्ञानिबर्हणेषुच प्रष्ठ स्त्रिष्वग्रगेश्रेष्ठेपुंसि

चांडालिकौषधौ ६ पाठश्च पठने भ्यातेविद्धपर्ण्यांतु योषिति ॥ पृष्ठंचरममात्रेपिदेहस्यावयवांतरे ७ वंठः स्यादकृतोद्वाहेखर्वे कुंताः युधेपिच शठोमध्यस्थपुरुषेधूर्त्तेधूस्तूरयोरपि ८ श्रेष्ठो वरेकुबेरेचशोठोमूर्खेऽलसेपिच षष्ठी कात्यायनीतिथ्योस्त्रिषु षण्णांच पूरणे ९ हठः स्यात्प्रसभे पृश्न्यांहेठो बाधाविहेठयोः ॥

॥ ॥ ठत्रि ॥ ॥ अपष्ठुपुंसिकालेचवामेस्यादन्यलिंगकः १० अंबष्ठो देशभेदेपिविप्राद्वैश्यासुतेपिच अंबष्ठा चाम्ललोण्यांस्या त्पाठायूथिकयोरपि ११ कमठः कच्छपेपुंसिभांडभेदेनपुंसकम् ॥ कनिष्ठो ऽतियुवाल्पानुजेस्त्रीदुर्बलांगुलौ १२ जरठः कर्कशेपां डौकठिणेप्यभिधेयवत् नर्मठ श्चिबुकेषिड्गे प्रतिष्ठागौरवेक्षितौ १३ स्थानेचयागनिष्पत्तिचतुरक्षरपद्ययोः प्रकोष्ठो मणिबंधस्यकू र्परस्यांतरेपिच १४ भूपकक्ष्यांतरेपिस्या द्धरिष्ठं मरिचेपिच ॥ ताम्रेक्लीबंतित्तिरौनावरीरुत्तमयोस्त्रिषु १५ मकुष्ठो व्रीहिभेदे नामंथरेपुनरन्यवत् लघिष्ठो ऽत्यल्पकेभेलेवैकुंठः कृष्णशक्र योः १६ श्रीकंठो देशभिद्युग्मेसाधिष्ठो ऽतिदृढार्थयोः ॥ ठचतुः ॥ कलकंठः कलध्वानेहंसेपारावतेपिके १७ कालकंठश्च दात्यूहेकलविंकेचखंजने मयूरेपीतशालेचस्यात्खंडपरशौपुमान् कालपृष्ठं कर्णचापेपुंसिकंकविहंगमे स्याद्वृंतशठो जंबीरेकपि त्थेकर्मरंगके १९ नागरंगेपिचपुमान्स्याच्चांगेर्यांतुयोषिति पू तिकाष्ठं चसरलदेवदारुमहीरुहोः २० स्वत्रकंठः पुमान्विप्रे खंजरीटकपोतयोः हारिकंठः पिकेपुंसिहारान्वितगलेत्रिषु २१

॥ ॥ इति ठांतवर्गः ॥ ॥ डैकं ॥ डः पुमान्वाडवाग्नौस्या डाकिन्यांस्त्रीनिगद्यते ॥ डद्वि अंडं मुष्केचपेश्यांस्या दिंडातु बुधयोषिति १ सौरभेय्यांचवचनेवसुमत्यामपिस्त्रियाम् कांडः स्तंबेतरुस्कंधेबाणेऽवसरनीरयोः २ कुत्सितेवृक्षभिन्नाडीवृंदे रहसिनस्त्रियाम् क्रीडा केलिप्रकारेस्यात्तबलावज्ञानयोरपि ३

कुंडमग्न्यालयेमानभेदेदेवजलाशये कुंडीकमंडलोजारान्पतिवत्नीसुतेपुमान् ४ पिठरेतुननास्त्वेडोध्वनौकर्णामयेविषे क्ष्वेडा वंशशलाकायांसिंहनादेचयोषिति ५ लोहितार्कपर्णफलेघोषपुष्पेनपुंसकम् दुरासदेचकुटिलेवाच्यलिंगःप्रकीर्त्तितः ६ क्रोडःशनौसूकरेनानपुमानंकरक्षसो खंडोस्त्रीशकलेनेक्षुविकारमणिदोषयोः ७ खंडःपानांतरेभेदेगंडःस्यात्पुंसिखड्गिनी ग्रहयोगप्रभेदेचवीथ्यगेपिटकेपिच चिन्हवीरकपोलेषुहयभूषणबुद्बुदे गडुःपृष्ठगुडेकुब्जेगडोमीनांतराययोः ९ गुडःस्याद्गोलकेहस्तिसन्नाहेक्षुविकारयोः गुडास्नुह्यांचकथितागुडिकायांचयोषिति १० गोंडःपामरजातौचवृद्धनाभौचतद्वति चंडोनातितिंडीवृक्षेयमकिंकरदैत्ययोः ११ चंडाधनहरीशंखपुष्पीत्रिष्वतिकोपने चंडीकात्यायनीदेव्यांहिंस्रकोपनयोषितोः १२ तीव्रेपिचूडावडभौशिखायांबाहुभूषणे चोडःप्रावरणेभून्निदेशभेदेजडास्त्रियां १३ शूकशिंब्यांहिमग्रस्तमूकाप्रज्ञेषुतुत्रिषु ताडस्तुताडनेघोषेमुष्टिमेयतृणादिषु १४ ताडीपत्रद्रुमेचाथदंडोःस्त्रीलगुडेपुमान् व्यूहभेदेप्रकांडेःश्वेकोणमथानयोरपि १५ सैन्येकालेमानभेदेचंडांशोःपारिपार्श्विके दमेयमेःभिमानेच नाडीनालेव्रणांतरे १६ शिरायांगंडदूर्वायांचर्यायांकुहनस्यच तथाषट्क्षणकालेपिनीडंस्यानकुलाययोः १७ पंडःषंडेपिपिस्त्रीस्यात्साडुर्नान्यपतौसिते पिंडोबोलेबलेसांद्रेदेहागारैकदेशयो १८ देहमात्रेनिवापेचगोलसिल्हकयोरपि ओड्रपुष्पेचपुंसिस्यात्क्लीबमाजीवनायसोः १९ पिंडीतुपिंडीतगरेःलाबुखर्जूरभेदयोः पीडाक्षपाशिरोमाल्याःपमर्दसरलद्रुषु २० ओंडंपात्रेवणिड्मूलधनेभूषाःश्वभूषयोः मंडःपंचांगुलेशाकभेदेक्लीबंतुमस्तुनि २१ आमलक्यांस्त्रियांमंडाःस्याःस्त्रियांसारपिच्छयोः मुंडोदैत्यांतरेराहुग्रहेनासुंडितेत्रिषु २२ मुंडा

मुंडीरिकायांस्यात्स्त्रियामस्त्रीतुमूर्द्धनि रंडा मूषिकपर्ण्यांच
विधवायांचयोषिति २३ रोडः क्षोदेभवेत्पुंसितृप्तेतुवाच्यलिं
गकः रंडा तुपांसुलायांस्त्रीत्रिषुहस्तादिवर्जिते २४ व्याडो
हिंस्रपशौसर्पेशुंडापानगृहेमता अप्यंबुहस्तिनीवेश्याहस्ति
हस्तसुरासुच २५ शौंडो मत्तेचविख्यातःपिप्पल्यांचभवेत्स्त्रि
यां षंडं पद्मादिसंघातेनस्त्रीस्याद्गोपतौपुमान् २६ ॥ डत्रि
॥ करंडोमधुकोशासिकारंडेषुदलाढके कूष्मांडयु मायांस्त्री
पुंसिकर्कारौचगणांतरे २७ भ्रूणांतरेऽथकोदंडंचापेनानीवृदं
तरे भुव्यथोगारुडंस्वेडमंत्रेमरकतेपिच २८ तरंडोवडि
सीसूत्रबद्धकाष्ठादिकेप्लवे नौकायामपिस्त्रीस्यात्तित्तिडीडिं
बचिंचयोः २९ द्राविडोदेशभिज्जातेसंख्याभिद्वदमुख्ययोः
निर्गुंडी नीलशेफाल्यांसिंधुवारद्रुमेपिच ३० प्रचंडो दुर्वहे
श्वेतकरवीरेप्रतापिनि प्रकांडोनस्त्रीविटपेमूलशाखांतरेतरोः
॥३१ शस्तेपिच्छंड उदरेपशोरवयवेपुमान् पूत्यंडोगंधकीटेपि
तथाजंत्वंतरेपुमान् ३२ वरंडो ष्यंतरेवेदीसमूहमुखरोगयोः
वारुंडोद्वारपिंड्यांस्त्रीफणीनांराजकेपुमान् ३३ नस्त्रियांसे
कपात्रेचमलेस्यणःश्रवणस्यच भेरुंडा देवताभेदपक्षिण्यंतरयोः
स्त्रियां ३४ भयानकेवाच्यवत्स्यान्मार्तंडःक्रोडसूर्ययोः मा
रुंडोऽडेभुजंगीनां मार्गेगोमयमंडले ३५ वरंडा सारिकावर्त्ति
शास्त्रभेदेचयोषिति वितंडा वादभेदेस्यात्करवीशाकेशिलाह्वये
३६ करवीर्यामपिस्त्रीस्याच्छिखंडोबर्हचूडयोः शरंडस्तुपुमान्धू
र्त्तेशरटेभूषणांतरे ३७ ॥ डचतुः ॥ अपोगंडस्तुबालेभेवि
कलांगेशिशावपि अतिगंडोयोगभेदेबृहद्गंडेतुवाच्यवत् ३८
चक्रवाडो ऽद्रिभेदस्याच्चक्रवाडं तुमंडले जलरुंडोजलाव
र्त्तपयोरेणौभुजंगमे ३९ देवताडःसैंहिकेयेजीमूतेचहुताशने
अथवातहुंडावात्याराजयोषितयोरपि ४० पञ्चिलस्फोटि

कायाचवामापामपियोषिति॥ ॥इतिडांतवर्गः॥५९॥ ढैकं॥
ढोढक्कायांपुमानुक्तःशुनितस्यचलांगुले॥ ॥ढद्वि॥ गूढंरह
सिगुह्येचनहूयोःसंवृतेत्रिषु १ दृढंस्थूलेनितांतेचप्रगाढेबलव
त्यपि माढिःस्त्रीपत्रपंक्तौचदैन्यस्यापिप्रकाशने २ मूढस्तु
तंत्रितेबालेराढा स्त्रीशुद्धपुष्पोभयोः रूढंजातेप्रसिद्धेचबाढंदृ
ढप्रतिज्ञयोः ३ व्यूढःसंहतविन्यस्तपृथुलेष्वभिधेयवत् वो
ढानाभारिकेसूते शंढःस्यात्पुंसिगोपतौ ४ आरूढोडेवर्षवरे
तृतीयाप्रकृतावपि षोढातितिक्षासंयुक्तेशक्तेचाप्यभिधेयवत् ५
॥ढत्रि॥अध्यूढाकृतसापत्न्यनार्यामध्यूढईश्वरे आषाढो
व्रतिनांदंडेमासेमलयपर्वते ६ स्त्रीपूर्णिमायामालीढंपादन्या
सेशितेत्रिषु उदूढं ऊढेस्थूलेस्यादुपोढोनिकटोढयोः ७
प्रगाढःकृच्छ्रदृढयोःप्रमीढोमूत्रितेघने प्ररूढोजठरेरूढमूले
वारूढइत्ययं ८ वरूथांचलेकपाटेऽन्यौपंजरेशंबलेपिच वि
रूढोंकुरितेजातेविगूढोगर्हितेपिच ९ गुप्तेपित्रिषुसंरूढमौ
ढेचांकुरितेत्रिषु समूढःपुंजितेभुग्नेसद्योजातेनुपप्लुते १०॥ ॥
ढचतुः॥अध्यारूढंसमारूढेऽभ्यधिकेचाभिधेयवत् खट्वा
रूढःश्रितेखट्वामविनीतेचवाच्यवत् ११ प्रत्यालीढंतुचर
णन्यासभेदेशितेत्रिषु॥ इतिढांतवर्गः॥ णैकम्॥ णःपु
मान्बिंदुदेवेस्याद्भूषणेगुणवर्जिते पानीयनिलयेपीतिकेचिद्
गुर्विपश्चितः १ ॥णद्वि॥ अणुर्व्रीहिविशेषेस्यात्पुंसिसूक्ष्मे
भिधेयवत् अणिराणिवदस्राग्रकीलाश्रिसीमसुस्त्रियो. २ उ
ष्णोभीष्मेपुमान्दक्षाशीतयोरन्यलिंगकः ऊर्णामेषादिलोम्नि
स्यादंतरावर्तकेभ्रुवो. ३ कर्णःपृथान्यपुत्रसुतेसुवर्णालौश्रुता
वपि क्षणःपर्वोत्सवव्यापारेपुमानेऽप्यनेहसः ४ कणाजीरक
कुंभीरमक्षिकापिप्पलीषुच कणोऽतिसूक्ष्मेधान्यांशेकाणःका
केकचक्षुषो. ५ कीर्णंदत्तेचविक्षिप्तेहिंसितेप्यभिधेयवत्॥

**कुणि** स्तुन्नकवृक्षेनाकुकरेत्वभिधेयवत् ६ **कृष्ण**ःस्यवतीपु त्रेवायसेकेशवेऽर्जुने **कृष्णा**स्याद्द्रौपदीनीलीकणाद्राक्षासुयोषि ति ७ मेचकेवाच्यलिंगस्यातक्लीबेमरिचलोहयोः **कोणो**वाद्य प्रभेदेस्याद्वीणादीनांचवादने ८ एकदेशेगृहादीनामस्रौचल गुडेपिच **गणः**प्रथमसंख्योघेचंडासैन्यप्रभेदयोः ९ **गुणो** मौर्व्यामप्रधानेरूपादौसूददंद्रिये त्यागशौर्यादिसत्वादिसंध्याद्यावृत्ति रज्जुषु १० शुक्लादावपिरव्यांचगेष्णुर्नागायनेनटे **घ्राणं** क्लीबंनासिकायांघ्रातेस्याद्वाच्यलिंगकं ११ **घृणा**जुगुप्साकृप योरस्थचूर्णीकपर्दके **चूर्णो**धूलौक्षारभेदेचूर्णानिवासयुक्तिषु १२ **जर्णु**श्चंद्रेचवृक्षेच**जिष्णु**र्नावासवेऽर्जुने जित्वरेवाच्यवज्जीर्णं परिपक्वपुराणयोः १३ **तूणिः**क्रमुकभेदेपिदुष्टदैवश्रुतौस्त्रियां त्राणं तुत्रायमाणायांरक्षणेरक्षितेत्रिषु १४ **तीक्ष्णं**सामुद्रल वणेविषलोहाजिमुष्कके क्लीबंजवाग्रजेपुंसितिग्मात्मत्यागिनो त्रिषु १५ **तूणी**नील्यांनिषंगेना**तृष्णा** स्यात्तर्षलिप्सयोः **दी** र्णोविदारितेभीते**द्रुणं** चापेऽलिनि**द्रुणः**१६ **द्रुणं** बुद्रोणीक च्छपयोर्**दैष्णु** र्दातरिदुर्गमे **द्रोणो**ऽस्त्रियामाढकेस्यादाढवाप चतुष्टये १७ पुमान्कृपीपतौदग्धकाकेस्त्रीनीरदेतरे तथाक ष्ठांबुवाहिन्यांगवादीनामपीष्यते १८ **पणो**वराटमानेस्या न्मूल्येकार्षापणेग्रहे क्रेय्यशाकादिकाघूतव्यवहारेभृतौधने १९ **पर्ण**पत्रेकिंशुकेनापा**र्ष्णि**स्यादुन्मदस्त्रियां स्त्रियांद्वयोःसै न्यपृष्ठेपादग्रंथ्यधरेपिच २० **प्राणो**हृन्मारुतेवालेकाव्यजीवेऽ निलेऽबले पुल्लिंगःपूरितेवाच्यलिंगःपुंभून्मिचासुषु २१ **पूर्ण** शस्केसमग्रेनापूरितेत्वभिधेयवत् **फाणि**र्गुडेकरंबेचस्त्रियांषा णीतुयोषिति २२ भूतावपिसरस्वत्यां**भ्रूणः**स्त्रीगर्भडिंभयोः **मणिः**स्त्रीपुंसयोरश्मजातौमुक्तादिकेपिच २३ कंठदेशेस्त नेजायाश्लिंगाग्रेऽलिंजरेपिच **मोणः**शुष्कफलेनक्रमक्षिकाःदि

करंडयो॰ २४ रणः कोणे क्वणे पुंसि समरे पुंनपुंसकं रेणुः स्त्रीपुं
स्योर्धूलौ पुल्लिंगम्पर्पटे पुनः २५ वर्णो द्विजादि शुक्लादि यशो गुण
कथासु च स्तुतौ ना न स्त्रियां भेद रूपाक्षर विलेपने २६ बाणः स्या
न्नौस्तने दैत्यभेदे केवल कांडयोः बाणा तु बाणमूले स्त्री नीलझिं
ट्यां पुनर्द्वयो॰ २७ वीणा विद्युति वल्लक्यां वृष्णिः षंडवचंद्रयोः
त्रिषु नायादवेमेषे वेणी केशस्य बंधने २८ नद्यादेरंतरे देवता
ले वेणुर्नृपांतरे त्वक्सारेपि च पुंसि स्याच्छाणो माषचतुष्टये
२९ लोहादीनां च निकषे शाणो सावरणांतरे श्रोणिः कटौ च मार्गे
स्त्री शीर्णं तनुविशीर्णयोः ३० श्रेणिः स्त्रीपुंसयोः पंक्तौ समान
शिल्पिसंहतौ शोणः कृशानौ श्योनाके लोहिताश्वे नदे पुमान् ३१
त्रिषु कोकनदच्छाये स्थाणुः कीले हरे पुमान् अस्त्री ध्रुवः स्थूणा
स्यात्सूर्म्यां स्तंभे गृहस्य च ३२ ॥णत्रि॥ अरुणोऽव्यक्तरागे
ऽर्के संध्यारागेऽर्कसारथौ निःशब्दे कपिले कुष्ठभेदे ना गुणिनि
त्रिषु ३३ अरुणाऽतिविषा श्यामा मंजिष्ठा त्रिवृतासु च अर
णिर्वह्निमंथे ना द्वयोर्निर्मथ्यदारुणि ३४ अभीक्ष्णं तु भृशे नि
त्यतद्युक्तक्रिययोस्त्रिषु इंद्राणी करणे स्त्रीणां पौलोमी सिंधुवारयोः
३५ ईरिणं तूषरे शून्ये वीक्षणं दर्शने दृशि ऊषणं मरिचे क्लीबं
कणायामूषणा स्त्रियाम् ३६ एषणी व्रणमार्गानुसारिण्यां च
तुलाभिदि करुणस्तु रसे वृक्षे कृपायां करुणा मता ३७ क्रु
त्तृणतृणभित्तृष्ण्यो॰ करणं हेतुकर्मणोः वणिजादौ गलेप
नृत्यगीतप्रभेदयो॰ ३८ क्रियाभेदे द्रियक्षेत्रकायसंवेशनेषु च का
यस्थे साधने क्लीबं पुंसि शूद्राविशोः सुते ३९ कल्याणमक्षयस्व
र्गे मंगलेपि नपुंसकं कंकणं करभूषायां सूत्रमंडनयोरपि ४०
करेणुर्गजयोषायां स्त्रियां पुंसि मतंगजे कार्मणं मंत्रतंत्रादि
योजने कर्मठेपि च ४१ काकिणी पणतुर्यांशे मानदंडे च दृश्यते
दृष्णलैकवराटयो॰ स्यादुन्मानस्यांशकेपि च ४२ कारणं कर

णे हेतु बधयोश्च नपुंसकं स्त्री यातनायां कुर्वाणो भृत्यकारकयोस्त्रिषु ४३ कृपाणः खड्गे च्छुरिका कर्त्तयोरपि योषिति कृपणस्तु कृमौ पुंसि मंद कुत्सितयोस्त्रिषु ४४ क्षेपणं प्रेरणे नौकादंडजालभिदोः स्त्रियां ग्रहणं स्वीकारादरकरोपरागोपलब्धिवेदिषु ४५ स्याद्ग्रामणीः प्रधानेऽधिपतौ त्रिषु नापिते पुंसि ग्रामीणा नीलिकायां स्त्री ग्रामोद्भूतेऽभिधेयवत् ४६ गोकर्णोऽश्वतरे सर्पसारंगे च गणांतरे अंगुष्ठानामिकोन्माने गोकर्णी मूर्विकौषधौ ४७ चरणोऽस्त्री बह्वृचादौ मूले गोत्रे पदेपि च भ्रमणे भक्षणे चापि नपुंसकमुदाहृतः ४८ जरणं जीरकेऽजाजीहिंगुसौवर्चले पि च तरुणो कुब्जपुष्पे ना कवुके पूनि तु त्रिषु ४९ तरणिर्द्युमणौ पुंसि कुमार्य्यौ नौकयोः स्त्रियां दक्षिणोदक्षिणोद्भूत सरलछंदवर्त्तिषु ५० आरामे त्रिषु यज्ञादि विधिदाने दिशि स्त्रियाम् द्रविणं नद्वयोर्वित्ते कांचने च पराक्रमे ५१ दारुणो रसभेदे ना त्रिषु तु स्याद्भयावहे द्रुघणो मुद्गरे पि स्यात् द्रुहिणे च परश्वधे ५२ दुर्वर्णं त्रिष्वसद्वर्णे क्लीबमैले च रूप्ययोः दौर्वीणमष्टपर्णे स्याद्दूर्वायां स्वरसे पि च ५३ धर्मण स्तु पुमान्वृक्षभेद सर्पप्रभेदयोः धारणं मानभेदे पि धारणे धरणी भुवि ५४ धर्षणं स्यात्परिभवे रतेः सत्यां तु धर्षिणी धरुणः सम्मते नीरे स्वर्लोके परमेष्ठिनि ५५ धारणी नाडिकायां स्यात् बुद्धोक्तमंत्रभिद्यपि धारणा गेच योगस्य नपुंसि स्याद्धिधारणे ५६ धिषणस्त्रिदशाचार्ये धिषणा धियि योषिति निःश्रेणिरधिरोहिण्यां खर्जूरीपादपे स्त्रियाम् ५७ निर्याणं वारणापांगदेशे मोक्षे ध्वनिर्गमे निर्माणं निर्मितौ सारे समंजसे नपुंसकं ५८ निर्वाणमस्तंगमने निर्वृतौ गजमज्जने संगमे प्यपवर्गे च प्रवणो ना चतुष्पथे ५९ क्रमनिम्नमहीभागोदरसक्तेषु च त्रिषु प्रघणस्ताम्रकुंभे स्यादलिंदे लोहमुद्गरे ६० प्रमाणं नित्यमर्यादाशास्त्रेषु सत्यवादिनि

द्रव्यत्वायां च द्वैतौ च क्लीबे कस्त्वेष्रमातरि ६१ पत्रोर्णं धौतकौशे ये क्लीबं स्याच्छ्योणके पुमान् पक्षिणी पूर्णिमायां स्याद्धिंदेग्यांश किनीभिदि ६२ आगामी वर्त्तमानाहर्युक्तरात्रावपि स्त्रियां प्र वेणिः स्त्री कुथावेण्योः पुराणं पंचलक्षणं ६३ पणे पुंसि त्रिषु प्रत्नेपूरणः पूरके त्रिषु क्लीबं पिंडप्रभेदे च पूरणी शाल्मलिद्रुमे ६४ पटारंभकसूत्रेषु प्रोक्षणं सेचने वधे वरुणस्तरुभेदे स्पु पश्चिमाशापतावपि ६५ वरुणस्तु पुमान् तिक्तशाकप्राकारयो रपि क्लीबं कन्यादि वरणे वेष्टने स्त्री नदीभिदि ६६ वारणं प्र तिषेधे स्याद्वारणस्तु मतंगजे ब्राह्मणं ब्रह्मसंघाते वेदभागे न पुंसकं ६७ भूमिदेवे तु पुल्लिंगः स्पृक्‌जिकापृक्कयोः स्त्रियाम् वा रुणी गंडदूर्वायां प्रतीचीसुरयोरपि ६८ भरणी घोषके ऋक्षे भरणं वेतने भृतौ श्रमणी कारुंडिकायां क्रीडायामथ शिल्पि ६९ भीषणो रससल्लक्यां नागाढे दारुणे त्रिषु मसृणो क र्कशे स्निग्धे त्रिषु मायां तु योषिति ७० मत्कुणो निर्विषाणे भे निः श्मश्रुपुरुषेपि च उद्दंशे नालिकेरे च मार्गणो याचके शरे ७१ मार्गणान्वेषणयोः क्लीबं यंत्रणं रक्षणे स्मृतं बंधने स्यान्नियमने रवणः शब्दने खरे ७२ रमणं पटोलमूले नार्यां स्त्री नाधवेस्म रे रोषणः पारदे हेमघर्षणोपलयोः पुमान् ७३ क्रोधने वाच्यलिं गः स्याद्रोहिणी कंठरुग्भिदि तडित्कटुंभरासोमवल्केषु लो हितागवोः ७४ लवणं सैंधवादौ ना सिंधुरक्षोभिदो रसे तद्यु क्ते वाच्यलिंगः स्यान्नदीभेदे द्विषोः स्त्रियाम् ७५ लक्षणं नाम्नि चिन्हे च सारस्यां लक्ष्मणा क्वचित् लक्ष्मणा त्वौषधीभेदे सारस्या मपि योषिति ७६ रामभ्रातरि पुंसि स्यात्स श्रीके चाभिधेयवत् विषाणी क्षीरकाकोल्यां अजशृंग्यां च योषिति ७७ कुष्ठनाम्नौ षधे क्लीबं पशुशृंगेभदंतयोः विपणिः पण्यवीथ्यां च भवेदाप णपण्ययोः ७८ शरणं गृहरक्षित्रोर्वधरक्षणयोरपि श्र

वर्णं चश्रुतौ कर्णे नक्षत्रे न नपुंसकं ७९ श्रमणो यतिभेदे ना निंद्य
जीविनि तु त्रिषु स्त्रियां सुदर्शना मांस्यो मुंडीभीशबरीभिदोः ८०
श्रावणो मासि पाषंडे देध्याल्यां श्रावणा स्त्रियां शिंघाणं का
चपात्रे च लोह्नासिकयोर्मले ८१ श्रीपर्णी काश्मरीकुम्योः
क्लीबं पद्माग्निमंथयोः संकीर्णं निचितेपि स्यादशुद्धे चापि भे
द्यवत् ८२ सरणिः पंक्तौ मार्गे च सारणो राक्षसांतरे रुग्भे
देना प्रसारण्यां स्वल्पनद्यां च सारणी ८३ सुषेणः करमर्दे
स्याद्विष्णुसुग्रीववैद्ययोः सुवर्णो ना स्वर्णकर्षे सुवर्णा लुम
स्वांतरे ८४ श्रीकृष्णागुरुणि क्लीबे कांचने हरिचंदने सुपर्णः
स्वर्णचूडे च गरुडे कृतमालके ८५ सुपर्णा कमलिन्यां च वैन
तेयस्य मातरि हरेणुर्ना सतीले स्त्री रेणुका कुलयोषितोः ८६
हरणं यौतकादीनां द्रव्ये भुजे हृतावपि हरिणः पुंसि सारंगे
विषदे त्वभिधेयवत् ८७ हरिणी हरितायां च नारीभिद्वृत्त
भेदयोः सुवर्णप्रतिमायां च हर्षणोऽक्षिरुगंतरे ८८ हर्षके
योगभेदे च श्राद्धदेवेपि च क्वचित् हिरण्यं रेतसि स्वर्णवराटे च नपुं
सकम् ८९ ॥णचतुः॥ अंगारिणी हसंत्यां च भास्करस्य
क्तदिश्यपि अथर्वणिर्नाऽथर्वज्ञ ब्राह्मणे च पुरोधसि ९०
अतर्पणं प्रीणये स्यान्मंगलालेपनेपि च आरोहणं स्यात्सो
पाने समारोहे प्ररोहणे ९१ उत्क्षेपणं तु व्यजने धान्यमर्दन व
स्तुनि स्यादुद्धरणमुद्धारवांतान्नोन्मूलनेष्वपि ९२ कार्षा
पणोऽस्त्री कार्षिके पणषोडशकेपि च अथ कामगुणो रागे
विषयाभोगयोरपि ९३ चीर्णपर्णं तु निंबेपि खर्जूरीभूरुहे पु
मान् चूडामणिः शिरोरत्ने काकचिंच्या फले पुमान् ९४
जुहुवाणोऽपिचाध्वर्यावपि स्याज्जातवेदसि तंडुवीणः कीट
मात्रे बर्बरे तंडुलोदके ९५ त्रायमाणा वार्षिके स्त्री रक्ष्यमाणे
ऽभिधेयवत् तैलपर्णी मलयजे श्रीवासे सिल्हकेपि च ९६

दाक्षायणीत्वपर्णायामश्विन्यांचुडुपुंस्त्रिया अथद्रेवमपि भर्गेःश्चावर्तकौस्तुभेपिच ९७ नारायणोच्युतेभीरुगौयोनारायणी मता अथोनिगरणंक्लीबंभोजनेस्याद्गलेपुमान् ९८ अथनिःसरणंमृत्युपायमोक्षेषुनिर्गमे स्यान्निस्तरणमुपाये निस्तारेतरणेपिच ९९ निरूपणंस्यादालोकेविचारेचनिदर्शने पर्पशीपश्चपर्णस्यशिरायांसूतकेबले १०० पर्णचूर्णरसेपिस्यात्पर्पशीणंतुपर्वणि प्रवारणंनिषेधेस्यात्काम्यदानेचनद्वयोः १ परीरणःस्यात्कमठेदंडेचपट्टशाटके परायणमभीष्टेस्यात्तत्पराश्रययोरपि २ परवाणिःपुमान्धर्माध्यक्षवत्सरयोरपि परायणंसमासंगकार्त्स्न्येपारगतावपि ३ पीलुपर्णीबिंबिकायांमूर्वायामोषधीभिदि अथपुष्करिणीचेभ्यांसराजिन्यांजलाशये ४ मधुपर्णीतुगंभार्यांनीलिसंज्ञौषधावपि मीनीश्रीणस्तुपुल्लिंगेदुर्दुराश्रेचखंजने १०५ रक्तरेणुस्तुसिंदूरपलाशकोरकेपुमान् रागचूर्णःपुमान्देतधावनेमकरध्वजे ६ रौहिणस्तुपुंसिस्यान्मद्रादेवबरेपिच लंबकर्णःस्मृतोकोठपादपेछगलेपिच ७ विदारणंविटंबेचभेदक्लीवंरणेद्वयोः अथवैतरणीनद्यांप्रेतानांयातुमातरि ८ शरवाणिःशरमुखेपापिष्टेशरजीविनि पुमानथोशिखरिणीरसालावृत्तभेदयो॰ ९ नारीरत्नेमल्लिकायारोमावल्यामपिस्त्रियां अथसंमरणंक्लीबमसंबाधचमूगतो १० घंटापथेचसंसारेरणारंभेचकुत्रचित् समीरणःस्यात्पवनेपथिकेचफणिज्जके ११ हस्तिकर्णश्चोरुबूकेपलाशगणभेदयोः ॥ णपंच ॥ अवग्रहणमित्येतत्प्रतिरोधेप्यनादरे १२ अवतारणंभूतादिग्रहेवस्त्रांचलेर्चने प्रविदारणमास्यातंसंपरायेःवदारणे १३ परिभाषायांसनिंदोपालंभनेनियमेपिच उक्तोमत्तवारणस्तुप्रक्लिन्नकटकुंजरे १४ क्लीबंप्रासादवीथीनांकुंडरक्षस्तलावपि मंडूकपर्णीमंजिष्ठाब्राह्मी

ण्योर्नातुशोणके १५ **रोमहर्षण** रोमांचेनाऽस्त्रतेचविभीतके **वा तरायण** उन्मत्तेनिष्प्रयोजनपूरुषे १६ कांडेचपरपत्रेचकूटेच परसंक्रमे ॥ **णषट्** ॥ **दोहदलक्षण** मुक्तंवयःसंधौचगर्भे च १७ **यौवनलक्षण** मव्याख्यातंलावण्यकुचयोश्च ॥ ॥ ॥इति**णांतवर्गः** ॥ **तैकं** ॥ तश्चौरामृतपुच्छेषुक्रोडेम्लेच्छेचकु त्रचित् अपुमांस्तरणेपुण्येकथितःशब्दवेदिभिः १ ॥ **तद्वि** ॥ **अस्तं** क्षिप्तेऽव्यवसितेत्रिषुनापश्चिमाचले **अंतं** स्वरूपेनाशेना लस्त्रीशेषेंऽतिकेत्रिषु २ **आर्त्तिः** पीडाधनुष्कोट्योःस्त्र्यामेलब्धे स्वसत्त्वयोः **आप्तिः** स्त्रीयोगसंप्राप्त्योरितं स्मृतेगतेत्रिषु ३ **इति** र्डिंबेप्रवासेतिरुक्ष्यादिषट्सुचस्त्रियाम् **उक्त** मेकाक्षरछंदस्यु क्तं स्याद्भाषितेत्रिषु ४ **ऊतिः** स्त्रीरक्षणेस्यूतावृतिःकल्याणव र्त्मनोः जुगुप्सास्पर्द्धयोःस्त्रीस्यादृतमुञ्छशिलेजले ५ सत्येदीप्तेपू जितेस्या **दृतु** र्वर्षादिषट्सुच आर्तवेभासिचपुमानेतःकर्बुरआ गते ६ **क्षत्ता** शूद्रात्क्षत्रियजेप्रतीहारेचसारथौ भुजिस्यातन येपिस्यान्नियुक्तवेधसोःपुमान् ७ **कर्त्ता** तुकारकेवाच्यलिंगोनाप रमेष्ठिनि **क्रतु** र्यज्ञेमुनौपुंसि**कांतिः** शोभेच्छयोःस्त्रियाम् ८ **कां ता** नार्य्यांप्रियंगौस्त्रीशोभनेत्रिषुनाधवे लोहेचचंद्रसूर्यायःपया यांतःशिलासुच ९ **क्षिति** र्निवासेमेदिन्यांकालभेदेक्षयेस्त्रिया म् **कीर्त्तिः** प्रसादयशसोर्योषित् **कुंतो** गवेधिकायांस्यात् १० प्रासायुधेच**कुंती** गुग्गुलुपृथयोश्च शल्लुक्या **कृतं** युगेऽलम र्थेस्याद्विहितेहिंसितेत्रिषु ११ **कृत्तं** तुवेष्टितेछिन्ने**कृतिः** कारण हिंसयोः **कृत्ति** श्चर्मत्वचोर्भूर्जेकृत्तिकायांद्वयंस्त्रियाम् **केतु** र्नारु क्पताकाऽविग्रहोत्पातेषुलक्ष्मणि **गर्त्त** स्त्रिगर्त्तभेदेस्याद्वटेऽ चकुकुंदरे १३ **ग्रस्तं** ग्रासीकृतेपिस्याल्लुप्तवर्णपदेपिच **गतिः** स्त्रीमार्गदशयोर्ज्ञानेयात्राभ्युपाययोः १४ नाडीव्रणसरण्यां चगतं विज्ञानयातयोः **गातु** र्नाकोकिलेभृंगेगंधर्वेत्रिषुरोषणे

१५ गीतिश्छंदसि गाने स्त्री गीतं शब्दितगानयोः गुप्तिः स्त्र्यव करस्थाने कारागारे च रक्षणे १६ गुप्तं स्याद्रक्षिते गूढे घात कांडप्रहारयोः घृतमाज्ये जले क्लीबं प्रदीप्ते त्वभिधेयवत् १७ चित्तं छन्ने त्रिषु चिता चित्यायां संहतौ स्त्रियाम् चितिश्चित्या संदयोः स्त्री जातं व्यक्तौघजन्मसु १८ क्लीबं त्रिलिंगमुत्पन्ने जातिः स्त्री गोत्रजन्मनो. अश्मंतिकामलक्योश्च सामान्यछंदसोरपि १९ जातीफले च मालत्यां ज्ञातिस्तातसगोत्रयोः पुमानथ ततं व्याप्ते विस्तृते च त्रिलिंगकं २० क्लीबं वीणादिवाद्ये स्यात्पुल्लिंग स्तु समीरणे तातोनुकंप्ये जनके तिक्तो रससुगंधयोः २१ तिक्ता तु कटुरोहिण्यां पर्पटे तु नपुंसकम् तूस्तं रेणौ च विख्यातं जटायां च नपुंसकं २२ त्रेतायुगेऽग्नित्रितये दत्तं विश्राणिते ऽर्चिते दंतो ऽद्रिकटके कुंजे दशने ऽथौषधौ स्त्रियाम् २३ दांतस्तु दमिते पि स्यात्तपःक्लेशसहे त्रिषु दितिर्दैत्यजनन्यां च खंडने पि च योषिति २४ दीप्तं निर्भासिते दग्धे ज्वलिते ऽथ द्रुतं त्रिषु शीघ्रे वि लीने विद्राणे द्युतिः स्त्री रश्मिशोभयोः २५ दृतिश्चर्मपुटे मत्स्ये ना धातुर्नेंद्रियेषु च शब्दयोनि महाभूततद्गुणेषु रसादि षु २६ मनःशिलादौ श्लेष्मादौ विशेषाद्गैरिके स्त्रि च धाता हिर ण्यगर्भे ना पालके त्रिष्वथो धुतं २७ त्यक्ते विधूते धूतं तु कंपिते भ र्त्सिते त्रिषु धूर्तस्तु खंडलवणे धुस्तूरे ना विटे त्रिषु २८ धृतिर्नष्टौ स्त्रि यां तुष्टौ योगभिद्धैर्यधारणे नतं तगरपादयां स्यात् क्लीबं कुटिलनम्र यो २९ त्रिषु नीतिर्नये पि स्यात् आपणे पि च योषिति पंक्तिः स्त्री गौरवे पाके पत्तिर्नापदगे स्त्रियां ३० गताचेकरथैकेभत्र्य श्वपंचपदातिके पंक्तिर्दशाक्षरच्छंदो दशसंख्यालिषु स्त्रियाम् ३१ पतिर्धवे ना त्रिष्वीशे प्राप्तं लब्धे समंजसे पातो निपातने त्राते त्रिषु प्राप्तिर्महोदये ३२ लाभे पि च स्त्रियां प्राप्तिः पूर्तिप्रा देशयोः स्त्रियाम् पीतिर्ना श्वे स्त्रियां पाने प्रीतं हृष्टे न नर्मणो ३३

पीतं पाने हरिद्रायां स्त्रियां गौरेऽभिधेयवत् प्रीतिर्योगांतरे प्रेम्णि स्मरपत्नीमुदोः स्त्रियाम् ३४ पुस्तं क्लीबे पुस्तके च लेप्यादिशिल्पकर्मणि पुतं तु रंगमगतौ क्लीबे पुंसि त्रिमात्रके ३५ पूतं त्रिषु पवित्रे च शटिते बहुलीकृते पूर्त्तं त्रिषु पूरिते स्यात्क्लीबं खातादिकर्मणि ३६ प्रोतं नपुंसकं वस्त्रे खचिते वाच्यलिंगकं प्रेतो भूतांतरे पुंसि मृते स्याद्वाच्यलिंगकः ३७ पोतः शिशौ वहित्रे च गृहस्थाने च वाससि वृत्तिस्तु वर्णेपि स्याद्वेष्टनेऽपि च योषिति ३८ भर्त्ता स्वामिनि पुंसि स्यात्त्रिषु धातरि पोष्टरि भक्तिर्विभागे सेवायां स्त्रियां भ्रांतिस्तु योषिति ३९ मिथ्यामितौ च भ्रमणे भित्तिः कुड्यप्रदेशयोः भीतिर्भये स्त्रियां भीतं भयेऽथ भीयुते त्रिषु ४० भूतिर्भस्मनि संपत्तौ हस्तिशृंगारयोः स्त्रियाम् भूतं क्ष्मादौ पिशाचादौ जंतौ क्लीबं त्रिषूचिते ४१ प्राप्ते वित्ते समे सत्ये देवयोन्यंतरे तु ना कुमारेपि भृतिः स्त्री स्यान्मूल्येपि भरणेपि च ४२ मतं तु सन्मते ज्ञाते मतिः स्त्रीच्छादियोस्मृतौ मंतुः पुंस्यपराधेपि मनुष्येपि प्रजापतौ ४३ माता गौर्यादिजननीगोब्राह्मण्यादिभूमिषु माति र्मानेप्यवच्छेदे मुक्तिर्मोक्षे च मोक्षणे ४४ मात्रादयः स्त्रियां मुक्तः प्राप्तमोक्षे च मोचिते त्रिषु स्त्री मौक्तिके मूर्त्तिः कायकाठिन्ययोः स्त्रियाम् ४५ मूर्त्तं स्यात्त्रिषु मूर्च्छाले कठिने मूर्त्तिमत्यपि मृतं तु याचिते मृत्यौ क्लीबं मृत्युमति त्रिषु ४६ यतिः स्त्री पादविच्छेदे निकारयतिनोः पुमान् यंता मेठे च सूते ना युक्तिः स्त्री न्याययोगयोः ४७ युतो युक्ते पृथग्भूते क्लीबं हस्तचतुष्टये रक्तो नुरक्ते नील्यादिरंजिते लोहिते त्रिषु ४८ क्लीबं तु कुंकुमे ताम्रे प्राचीनामलके स्त्रजि रतिः स्त्री स्मरदारेष्वरागे सुरतगुह्ययोः ४९ रत्नं वर्त्मनि नद्यां स्त्री रतं सुरतगुह्ययोः रिक्तं शून्ये वने रीतिः स्त्रियां स्यंदप्रचारयोः ५० पित्तले लोहकिट्टे च लूता प्रियंगुशाकयोः ऋक्ता ज्योतिष्मतीवल्ली

लत्ताकस्तूरिकासुच ५१ माधवीदूर्वयोर्लिप्तं विलिप्तविष
दिग्धयोः भुक्ते लूतातूर्णनाभपिपीलिकागदांतरे ५२ बस्ता
तुजनके पुंसिवापकेप्यभिधेयवत् वक्तातु पंडितेपिस्याद्वाग्मिन्य
प्यन्यलिंगकः ५३ व्यस्तंतुव्याकुलेव्याप्तेव्यक्तःस्फुटमनीषि
णो॰ वस्तिर्द्वयोर्निरूहेनाभ्यधोभूम्निदशासुच ५४ वर्त्ति भै
षजनिर्माणेनयनांजनलेखयो गात्राऽनुलेपनीदीपदशादीपे
षुयोषिति ५५ वार्त्तातुवर्त्तनेवातिगणेकृष्याद्युदंतयोः नि
साराराेग्ययोःक्लीबंवृत्तिर्मल्लीरुजोःस्त्रियां ५६ व्याप्तंख्याते
समाक्रांतेव्याप्तिर्व्यापनरंभयोः स्त्रियां वित्तिर्विचारेचला
भसंभावयोःस्त्रियां ५७ वित्तंक्लीबंधनेवाच्यलिंगंख्या
तेविचारिते वीतमसारगजेस्यादंकुशकर्मण्यसारतुरगेपि ;
वीतिर्गतौ॰वदीप्तौप्रजनाशनधावनेपुस्त्री ५८ वृत्तिर्विव
रणाजीवकैशिक्यादिप्रवर्तने ५९ स्त्री वृतं प्रसवबंधेघ
टीधाराकुचाग्रयो॰ वृत्तोऽधीतेप्यतीतेतिवर्तुलेपिरतेमृते ६०
दृढेऽन्यलिंगंवाक्लीबछंदश्चारित्रवृत्तिषु शक्तिरस्त्रांतरेगौर्यां
मुत्साहादौबलेस्त्रियां ६१ शस्तंक्षेमेप्रशस्तेचशांति स्त्री
मंगलेशमे शास्तासमंतभद्रेनाशासनेपुनरन्यवत् ६२ शां
तोऽभियुक्तरसयो॰पुंसित्रिषुशमान्विते अव्ययंवारणेशांतं
शांतंशितंचदुर्बले ६३ निशितेचशि ति भूर्जेनासितासित
योस्त्रिषु शीत हिमगुणेक्लीबशीतलालसयोस्त्रिषु ६४ वा
नीरेबहुवारेना शुक्तं सूतामु निष्ठुरे श्रुति श्रोत्रेचतत्कर्म॰
ण्याम्नायवातयो स्त्रियाम्॥ ६५ शुक्ति कपालशकलेशखेशं
खनखेपिच नख्यश्चावर्तदुर्नाममुक्तास्फोटेपुचस्त्रियां ६६
श्रुत माकर्णितेशास्त्रे श्वेतो द्वीपाद्रिभेदयो श्वेतावराटि
काकाष्ठपाटलाशंखिनीषुच ६७ क्लीबंरूप्येऽन्यवच्छुक्लेस
त्साधौधीरशान्तयो॰ मान्येसत्येविद्यमानेत्रिषुसाध्व्यमयोस्त्रियां ६८

स्मातिर्दाने: वसानेस्त्रीस्वांतं चेतसिगह्वरे स्थितं प्रतिज्ञात
वतिचोर्ध्वनिश्चलयोस्त्रिषु ६९ स्थितिः स्त्रियामवस्थाने मर्यादा
यांचसीमनि सित मवसितेचबद्धे धवलेत्रिषु धवलायांस्त्री ७०
सीता लांगलपद्धतिवैदेहीस्वर्गगंगासु सुत स्तुपार्थिवेपुत्रं
स्त्र्यपत्येतुसुता स्मृता ७१ सुप्तिः स्पर्शाज्ञतानिद्राविश्रंभेशय
नेस्त्रियाम् सूत स्तुसारथौतस्मिन्सन्त्रिया ब्राह्मणीसुते ७२ बंदि
पारदयोः पुंसिप्रसूतेप्रेरितेत्रिषु स्यूतिः सीवनसंतत्योस्त्रियां स्यू
तःप्रसेवके ७३ नात्रिषूतेस्मृतिर्धर्मशास्त्रस्मरणयोःस्त्रियां
सृतिः स्त्रीगमनेमार्गेसेतुर्नाः लीकुमारके ७४ हस्तः करेकरि
करेसप्रकोष्ठकरेपिच ऋक्षेकेशात्परोभ्राते हितं पथ्येगतेधृते
७५ हेतिः स्यादायुधज्वालासूर्यतेजःसुयोषिति ॥ तत्रि ॥
अमृतं यज्ञशेषेस्यात्पीयूषेसलिलेघृते ७६ अयाचितेचमोक्षे
चनाधन्वंतरिदेवयोः अमृतामागधीपथ्यागुडूच्यामलकीषुच
७७ अनृतं कृषावसत्येप्यजितो नाहरौत्रिषु अनिर्जितेचाच्युत
स्तुहरौपुंसित्रिषुस्थिरे ७८ अर्दितं याचितेपिस्याद्वातव्याधौच
हिंसिते अक्षतं नद्वयोःपंडेलाजेषुत्रिष्वहिंसिते ७९ यवेपि
क्वचिदव्यक्तो हरौस्मरहरेपुमान् परमात्ममहदाद्योःक्लीबं
स्यादस्फुटेत्रिषु ८० अनंतः केशवेशेषेपुमाननवधौत्रिषु
अनंता चविशल्यायांशारिवादूर्वयोरपि ८१ कणादुराल
भापथ्यापार्वत्यामलकीषुच विश्वंभरागुडूच्योःस्यादनंतंसु
रवर्त्मनि ८२ अभ्रांतमघ्रुभेचस्यांमरणेःनवधावपि स्त्र
त्रैष्यथाः यतिः पुंसिहिमदीधितिकालयोः ८३ अर्हस्तु क्ष
पणेबुद्धेपुंसिमान्येःस्यालिंगकः अर्हंतश्चापिसुगतेक्षपणेपिच
दृश्यते ८४ अगस्तिः कुंभयोनौचवंकसेनतरौपुमान् अर्व
तीकुंभदास्यांचवडवायांचयोषिति ८५ अंगतिः पुंस्यग्निहो
तृब्रह्मवन्हिष्वयादितिः भूदेवमात्रोरहतिस्त्यागेरोगेप्युभे

स्त्रियो ८६ आयातःपुंसिपतनेतदात्वेचप्रकीर्तितः आघ्रा
तंशिंघितेक्रांतेप्याख्यातंभाषितेतिङि ८७ आध्यातःश
ब्दितेदग्धेवातरुग्भेदसंयुते आप्लुतःस्नातकेस्नातेऽप्यादृतः
सादरेर्चिते ८८ आचितःशकटोन्मेयेपलानामयुतद्वये पुंलि
गःसंगृहीतेपिछन्नेपिस्यात्त्रिलिंगकः ८९ आहतंगुणितेचा
पिताडितेचमृषार्थके स्यात्पुरातनवस्त्रेपिनववस्त्रेचनाऽनके
९० आनर्तोदेशभेदेपिनृत्यस्थानेजलेरणे आवर्तश्चिंतनेवा
रिभ्रमेचावर्तनेपुमान् ९१ आस्फोतंतुपुमानर्कपर्णेस्यात्को
विदारके आस्फोतागिरिकर्ण्यांचवनमल्ल्यांचयोषिति ९२
आयस्तस्तेजितेक्षिप्तेक्लेशितेकुपितेहते आयतिस्तुस्त्रियांदै
र्घ्येप्रभावागामिकालयोः ९३ आयत्तिस्तुस्त्रियांस्नेहेवशित्वे
वासवेबले आकृतिस्तुस्त्रियांरूपेसामान्यवपुषोरपि ९४
आसत्तिःसंगमेलाभेस्त्रियामापत्तिरापदि प्रापणेपिचयोषि
त्स्यादुदंतःसाधुवार्तयोः ९५ उषितंन्युषितेदग्धेप्युदात्त
स्तुस्वरांतरे दयात्यागादिसंपन्नेकाव्यालंकारकल्पयोः ९६ उ
त्तप्तंशुष्कमांसेथत्रिषुतप्तेपरिप्लुते उचितंतुभवेन्न्यस्तेमितेज्ञा
तेसमंजसे ९७ उद्धृतं स्यात्त्रिषूत्क्षिप्तेपरिभुक्तोज्झितेपिच उ
त्थितंस्यात्त्रिषूत्पन्नेप्रोद्यतेवृद्धिमत्यपि ९८ उद्घातस्तुपुमा
न्पादस्खलनेसमुपक्रमे पवनाभ्यासयोगस्यकालभेदेचकीर्ति
तः ९९ उत्तुंगेमुद्गरेपिस्यादुदितंतूक्तआगते उल्लुतंत्रिषुसं
जातेसमुन्नद्धप्रहृष्टयोः १०० उन्मत्तउन्मादवतिधूस्तूरमुचुकुं
दयोः उद्वांतोनिर्मदगजेपुमानुद्वमितेत्रिषु १ एधतुःपुरुषेऽ
ग्नौना कलितंविदिताप्तयोः कपोतःस्याच्चित्रकंठपारावतवि
हंगयो २ अथक्रंदितमाह्वानेरुदितेपिनपुंसकं क्षारितः
स्राविताक्षारे अभिशस्तेपिचत्रिषु ३ कापोता रुचकेक्लीवेक
पोतोघंजनांतरे किरातोम्लेच्छभेदेस्याद्भूनिंबेऽल्पतनावपि ४

स्त्रियांचामरधारिण्यांकुट्टिनीदुर्गयोरपि **कृतांतो** यमसिद्धांतदैवाकुशलकर्मसु ५ **गर्जितं** वारिवाहादिध्वनौनामत्तकुंजरे **ग्रंथितं** गुंफितेक्रांतेहिंसितेचत्रिलिंगकम् ६ **गभस्तिः** किरणे सूर्येनास्वाहायांतुयोषिति **गव्यूत** स्त्रीस्वर्णलतयो**र्गोपतिः** शिवषंढयोः ७ नृपभास्करयोःपुंसिचे**ष्टितं** गतिचेष्टयोः **जगत** स्यातपिष्टपेक्लीबंवायौनाअंगमेत्रिषु ८ **जगती** भुवनेक्ष्मायां छंदोभेदेजनेपिच **जयंतो** वृक्षभिन्नौर्यौरिंद्रपुत्रीपताकयोः ९ पुमानेंद्रौक्रूरेभीमे**ज्वलितं** दग्धउज्वले **जामाता** दुहितुःपत्यौ सूर्यावर्त्तेधवेपुमान् १० **जीमूतः** द्रौधृतिकरेदेवताडेपयोधरे **जीवातुः** स्त्रियांभक्तेजीवितेजीवनौषधे ११ **जीवंती** जीवनीग्राम्योर्गुडूचीवृंदयोरपि **जृंभितं** करणेस्त्रीणामीहास्फोटितयोरपि १२ **त्वरितं** प्रजवेशीघ्रे**त्रिगर्तो** गणितांतरे देशेपिनाघुघुरिकाकामुकांगनयोःस्त्रियां १३ **तृणता** धनुषितृणत्वे **दंशित** मपिजानदंसितेपिस्यात कवचाचिते**द्विजाति** विंप्राडजयोश्चपुलिंगः १४ **दुर्जातं** व्यसनेक्लीबेसम्यग्जातेऽन्यलिंगकं **दुर्गति** र्नरकेनैस्व्येस्त्री **दृष्टांत** उदाहृतौ १५ शास्त्रेचमरणे धीमानपंडितेचबृहस्पतौ **निर्ऋतिः** स्यादलक्ष्म्यांस्त्रीदिशांपालांतरेपुमान् १६ **निकृतं** विप्रलंभेस्यान्नीचेविप्रकृतेपिच **निर्मुक्त** स्त्यक्तसंगेस्यान्मुक्तकंचुकभोगिनी १७ **निरस्त** त्रिषु निष्ठ्यूतेप्रेषितेवोद्वितोदिते संत्यक्तेचप्रतिहतेनिमित्तंहेतुलक्ष्मणोः १८ **निवातो** दृढसन्नाहेवातशून्येपिचाश्रये **निशांत** त्रिषुशांतेस्यात्क्लीबंतुभवनोषसोः १९ **निकृति** र्भर्त्सनेक्षेपेशठेशाठ्येपिचस्त्रियां **निर्वृत्तिः** सुस्थितावस्तंगमनेचसुखेस्त्रियां २० **नियति** र्नियमेदैवेस्त्री **पतत्** पातुगेखगे **प्रवृत्तां** वितते**सुपर्णे पर्यस्तः** पतितेहते २१ **प्रभूत** मुद्गतेप्राज्ये**पंडितः** सिल्हकेकवौ **पलितं** शैलजेतापे केशपाकेचकर्दमे २२ **प्रसृतः** सुप्रसारेस्याद्विनीतेवेगितेत्रिषु अर्द्धांजलौ

तुपुल्लिंगोजंघायांप्रसृतामता २३ प्रसूतंकुसुमेक्लीबंत्रि
षुसजातसूतयो: प्रणीत:संस्कृताग्नौनायज्ञपात्रांतरेस्त्रियां
२४ त्रिषुक्षिप्तोपसंपन्नविहितेषुप्रवेशिते प्रतीत:सादरेज्ञाते
हृष्टप्रख्यातयोस्त्रिषु २५ प्रमीतं वाच्यलिंगंस्यात्प्रोक्षितेपि
मृतेपिच परेतोवाच्यलिंग:स्यान्मृतेभूतांतरेपुमान् २६ प
र्वत: पादपेपुंसिशाकमत्स्यप्रभेदयो: देवमुन्यंतरेशैले प्रपा
तोनिर्झरे तटे२७ पर्याप्तंतुयथेष्टेस्यात्तृप्तौशक्तेनिवारणे पंचता
पंचभावेस्यान्मरणेपिचयोषिति २८ पक्षतिश्चभवेत्पक्षमूले
चप्रतिपत्तिथौ प्रसूतिरुद्भवेपिस्यात्तनयेदुहितर्यपि २९ प्रत
ति विंस्तृतौवल्ल्यांपद्धति:पंक्तिवर्त्मनो: प्रवृत्तिस्तुप्रवाहेस्या
दुदंतेचप्रवर्त्तने ३० आवत्यादौचपर्याप्ति:प्रकामप्राप्तिरक्षणे
प्रकृतिर्गुणसाम्येस्याद्मात्यादिस्वभावयो: ३१ योनौलिंगे
पौरवर्गे:प्रीपक्षस्याद्य:स्त्रियां पार्वती सल्लकीदुर्गागोपालपु
त्रिकासुच ३२ प्रार्थितंयाचितेशत्रुसंरुद्धेभिहतेत्रिषु पि
त्स न्विहंगमेपुंसिपतनेच्छौपुनस्त्रिषु ३३ पिशितं मांसेमांस्या
स्त्रीपिंडितं गुणितेघने पीडितंकरणेस्त्रीणांयंत्रितेबाधिते
पिच ३४ पुटितंस्याद्दहिपुटेपाटितस्यूतयोरपि पृषन्मृगेपु
मान्बिंदौनद्यो पृषतोपिना ३५ अनयोश्चत्रिषुश्वेतबिंदुयु
क्तेप्युभाविमौ प्रोक्षितंनिहतेसिक्तेबृहतीवसनांतरे ३६ छं
दोभित्क्षुद्रवार्ताकीवारिधानीषुवाचिच कंटकारीमहत्योश्च
भवद्धुप्रस्ततोस्त्रिषु ३७ स्त्रीबाणभेदेभरतोनाट्यशास्त्र
मुनौतटे रामानुजेचदौष्यंतौभास्वान्भास्वरसूर्ययो ३८
भारतंग्रंथभेदेस्याद्वर्षभेदे:प्यभारती वचनेचसरस्वत्यांप
क्षिवृत्तिप्रभेदयो ३९ भासंत:सुंदराकारेत्रिषुनाभासपक्षि
णि भावितंवासितेप्राप्तेभूभृन्नाद्रौमहीपतौ ४० महती
वल्लकीभेदेराज्येस्यात्तुनपुंसकं तत्त्वभेदेपुमान्वृद्धेवाच्य व

न्मथितंपुनः ४१ क्लीबंनिर्जलघोलेस्यात्रिष्वालोडितघृष्टयोः मरुद्वेसमीरेनाग्रंथिपर्णेनपुंसकम् ४२ मुषितंहृतखंडितयोर्मूर्छितमपिसोच्छ्रयेचमूढेच रजतंत्रिषुशुक्लेस्यात्क्लीबंहारेचदुर्वर्णे ४३ रमतिर्नायकेनाकेपुंसिस्याद्रसितंपुनः रुतस्तनितयोःक्लीबंस्वर्णादिखचितेत्रिषु ४४ रेवतीहलिपत्न्यांस्यात्ताराभिन्मातृभेदयोः रैवतस्तुसुवर्णालौशैलभेदेचशंकरे ४५ रोहितंकुंकुमेरक्तेऋजुशक्रशरासने पुंसिस्यान्मीनमृगयोर्भेदेरोहितकद्रुमे ४६ रोहिन्मृग्यांलताभेदेस्त्रीनार्केललितंत्रिषु ललितेचशितेपिस्याद्धारभेदेतुनद्वयोः ४७ लोहितंरक्तगोशीर्षकुंकुमेरक्तचंदने पुमान्नदांतरेभौमेवर्णेचत्रिषुतद्वति ४८ वर्द्धितंप्रसितेछिन्नेपूरितेवहतिर्गवि सचिवेपुंसिवहतुःपथिकेवृषभेपुमान् ४९ वनिताजातरागस्त्रीस्त्रियोस्त्रिषुचयाचिते सेवितेवापितंबीजाकृतमुंडितयोस्त्रिषु ५० वसतिःस्यात्स्त्रियांवासेयामिन्यांचनिकेतने व्यायतंव्यापृतेदीर्घेदृढेऽचातिशयेऽन्यवत् ५१ व्याघातोयोगभेदेस्यादंतरायप्रहारयोः वासिताकरणीनार्योर्वासितंभाविते रुते ५२ वासंतीमाधवीयूथ्योरुष्ट्रेनावहितेत्रिषु विविक्तंत्रिष्वसंपृक्तेरहःपूतविवेकिषु ५३ वसुनंदेनाविहस्तःपंडितेव्याकुलेत्रिषु विनीतःसुवहाश्वेस्याद्वणिज्यपिपुमांस्त्रिषु ५४ जितेंद्रियेऽपनीतेचनिभृतेविनयान्विते विश्वस्तोजातविश्वासेविश्वस्ताविधवस्त्रियाम् ५५ विद्युतडितिसंध्यायांस्त्रियांत्रिषुतुनिष्प्रभे विवृतासुद्रुग्भेदेविस्तृतेत्वभिधेयवत् ५६ विनेताःदेशकेराज्ञेनाविधातातुवेधसिस्मरेना विनता तार्क्ष्यजनन्यांपटकाभिदि ५७ विनतःप्रणतेभुग्नेशिक्षितेचाभिधेयवत् विकृतंत्रिषुबीभत्सरागितेसंस्कृतेपिच ५८ विक्षिप्तिरंगरागेविच्छेदेहारभेदेस्त्री विदितंबुद्धितार्थितयोर्विपत्तिरपियातनापदोर्योषित्

५९ वृत्तांतः प्रक्रियायां स्यात्कार्त्स्न्ये वार्त्ताप्रभेदयोः प्रस्तावेऽथेष्टि
तं रुद्धे लासके करणांतरे ६० वेल्लितं गमने क्लीबं कुटिले विधु
ते त्रिषु विवर्त्तः समुदाये स्यादपवर्तननृत्ययोः ६१ शकुंतः
कीटभेदे स्याद्भास पक्षिविहंगयोः श्रीमांस्तिलकवृक्षे नाममनोज्ञे
तानकत्रिषु ६२ श्रीपतिः पुंसि पृथिवीनाथे च मधुसूदने शु
द्धांतोंतःपुरे स्मान्नृपल्रहःकक्षांतरेपि च ६३ स्रवंती तु तरंगि
ण्यां गुल्मस्थानौषधीभिदोः संवर्त्तः प्रलये मुन्यंतरे कर्षफलेपि च
६४ स्खलितं चलिते भ्रेषे संहतं संगते दृढे संस्कृतं कृत्रिमे
शस्ते भूषितेप्यन्यलिंगक ६५ क्लीबं तु लक्षणोपेते स्थपतिः कं
चुकिन्यपि जीवेष्टियाजके शिल्पिभेदे नासत्तमे त्रिषु ६६ संघा
तः पुंसि घाते च संहतौ नरकांतरे संवित्तिः प्रतिपत्तौ स्यादविवादे ज
नस्य च ६७ संततिः स्यात्संक्तौ गोत्रे पारपर्ये पुत्रपौत्राणाम् संग
तिः संगमे ज्ञाने सन्नतिः प्रणतौ ध्वनौ ६८ समितिः संपराये
स्यात्सभायां संगमेपि च समाप्तिरवसाने स्यात्समर्थने ऽथ संमतिः
६९ अभिलाषेप्यनुज्ञायां संवित्स्यात्स्तु योषिति स्थापितं नि
श्चिते न्यस्ते स्तिमितोऽचंचलार्द्रयोः ७० सिकतास्त्री सिकतिले
वालुकायां तु भूमनि सुरतं स्यान्निधुवने देवले सुरतास्मृता ७१
सुकृतं तु शुभे पुण्ये क्लीबं सुविहिते त्रिषु सुव्रता सुखसंदोह्याशो
भनव्रतयोरपि ७२ सुनीतिः शोभननये ध्रुवमातरि योषिति सूनृ
तं मंगलेपि स्यात्प्रियसत्ये वचस्यपि ७३ हरित्दिशि स्त्रियां पुंसि
हयवर्णविशेषयोः अस्त्रियां स्यात्तृणे चाथ हर्मितं क्षिप्तदग्धयोः
७४ हरिता स्त्री च दूर्वायां हरिद्वर्णयुतेऽन्यवत् हसंत्यंगारधा
न्यां च मल्लिकाशाकिनीभिदोः ७५ हारीतः पक्षिभेदे स्यान्मुनिभे
दे च कैतवे हृषितं विस्मिते प्रीते प्रहते हृष्टलोमनि ७६ ॥तचतु
॥अवसितं मृद्धे ज्ञाते प्यवसानगते च वाच्यलिंगस्यात् अर्थपति
पुल्लिंगो धनाढ्ये नाथे च नरनाथे ७७ अवदातः सिते गौरे विशुद्धे

व्यन्यलिंगकः अवगीतं तु निर्वादे त्वदृगर्हितयोरपि ७८ अंतर्गतं विस्मृते स्यान्मध्यप्राप्ते च वाच्यवत् अंगारितं तु दग्धे स्यात्पलाशकलिकोद्गमे ७९ हसंत्यां चलतामात्रे नदीभेदे च योषिति। अपावृतस्तु पिहितेस्वतंत्रेपि च वाच्यवत् ८० अभ्याहितं महाभीतौ जीन्यानपेक्षकर्मणि अभिनीतं त्रिषु न्याय्ये संस्कृतामर्षिणोरपि ८१ अभिजातः कुलीने स्यात् न्याय्य पंडितयोस्त्रिषु अभियुक्तः परैरुद्ध तत्परे प्यभिधेयवत् ८२ अतिमुक्तस्तु निःसंगे वासंत्यां तिनिशेपि च अवध्वस्तः परित्यक्ते निंदिते प्यवचूर्णिते ८३ अधिक्षिप्तः प्रणिहिते कुत्सिते भर्त्सिते त्रिषु अंशुमान् भास्करे शालपर्ण्यामंशुमती स्मृता ८४ भवेदपचितिः पूजाव्ययनिष्कृतिहानिषु अथानुमति रूनेंदुपूर्णिमानुज्ञयोरपि ८५ अभिशस्तिः प्रार्थनापवादयोश्चत्रयं स्त्रियां आयुष्मान्योगभेदे ना वाच्यवच्चिरजीविनि ८६ उपाहितो ऽनलोत्पाते पुमानारोपिते त्रिषु उपाकृतो ऽध्वरहतपशौ नोपद्रुते त्रिषु ८७ उदास्थितः प्रतीहारे प्रव्रज्यावसिते चरे स्यादुल्लिखितमुत्कीर्णे तनूकृते च वाच्यवत् ८८ उद्ग्राहितमुदीर्णे स्यादुद्धृतग्राहितयोः त्रिषु भवेदुपचितं दग्धे समृद्धे वाच्यलिंगकं ८९ उज्जृंभितं त्रिषु स्फुल्ले चेष्टायां तु नपुंसकं उपरक्तो व्यसनार्ते राहुग्रस्तेंदुसूर्ययोः ९० उपसत्तिः संगमात्रे सेवायामपि योषिति ऋष्यप्रोक्ता शतावर्यतिबलाशूकशिंबिषु ९१ ऐरावतो ऽभ्रमातंगे नारंगे लकुचद्रुमे नागभेदे च पुंसि स्यादिद्युत्तद्भेदयोः स्त्रियां ९२ नपुंसकं महेंद्रस्य ऋजुदीर्घशरासने कलधौतं सुवर्णे स्याद्रजते च नपुंसकं ९३ भवेत्कुहरितं क्लीबं पिकालापे रतध्वनौ कुमुद्वान् कुमुदप्रायदेशे स्याद्वाच्यलिंगकः ९४ कुमुद्वती कुमुदिन्यां कुशपल्ल्यां च योषिति कृष्णवृंता पाटलायां माषपर्ण्यां च योषिति ९५ अथ गंधवती पृथ्वी पुरीभिद्यासमा

नृषु सुरायांचगरुत्मांश्चपक्षिमात्रेखगाधिपे १९६ भवेद्गृह
पतिःपुंसिगृहस्थेपिचमंत्रिणि चंद्रकांतस्तुपुंसिस्यान्मणि
भेदेचकैरवे १९७ चर्मण्वतीनदीभेदेकदलीपादपेस्त्रियाम्
चित्रगुप्तस्तुपुंसिस्याद्यमेतस्यचलेखके १९८ दिवांभीतःकुं
भिलेस्यादुलूकेकुमुदाकरे दिवाकीर्तिस्तुपुंसिस्यान्नापितांताव
सायिनो १९९ द्वीपवान्सिंधुनद्योर्द्वीपवत्यापगाभुवो- दृष
द्वती नदीभेदेकात्यायन्यामपिस्त्रियां २०० स्याद्धूमकेतु
रुत्पातभेदेवैश्वानरेपुमान् नंद्यावर्तःपुमान्वेश्मप्रभेदेभगवद्दुमे
१ नदीकांतःसमुद्रेस्यादिज्जलेसिंदुवारके नदीकांता स्त्रियां
जम्बूकाकजंघौषधावपि- २ नागदंतो हिपरदेगृहान्निर्गतदा
रुणि नागदंती तुकुंभायांश्रीहस्तिन्यामपिस्त्रियाम् ३ निष्का
शितो निर्गमितेऽप्याहितेऽधिकृतेपिच अथनिस्तुषितं त्यक्ते
त्वग्निहीनेलघूकृते ४ निराकृतिरनाकारेःस्वाध्यायेवारणेत्रि
षु परिगतंत्रिषुप्रासेविस्मृतज्ञानचेष्टिते २०५ अथप्राणिहितं
न्यस्तेप्रासेपिचसमाहिते अथपल्लवितंलाक्षारक्तेसपल्लवेततेः
६ भवेत्प्रणिहितंद्विष्टेप्रतिस्खलितवद्भये. प्रतिक्षिप्तंवारिते
स्यात्क्षेपितेपंचकंत्रिषु ७ परिवर्तो विनिमयेकूर्मराजेप्रवर्तने
परिस्रुतास्त्री वारुण्यांस्यन्नेस्यादभिधेयवत् ८ प्रधूपि
ताक्लेशितायांसूर्यगंतव्यदिश्यपि पंचगुप्तस्तुचार्वाकदर्शने
कमठेपुमान् ९ प्रजापतिश्चदक्षादौमहीपालेविधातरि प्रति
पत्तिःप्रवृत्तौचप्रागल्भ्येगौरवेपिच १० संप्राप्तेचप्रबोधेचपद
प्राप्तौचयोषिति अथप्रव्रजिता मांसीमुंडीरीतापसीषुच ११
प्रतिकृतिरथार्चायांप्रतिनिधिप्रतीकारयोश्चस्त्री पाशुपतो
बकपुष्पेस्यात्पशुपत्यधिदैवतेचतद्भक्ते १२ पारिजातःसुर
तरौपारिभद्रतरावपि पारावतीगोपगीतेनदीभिल्लवलीफले
१३ पारावतःकलरवेतथामर्कटतिंदुके पुष्पदंतस्तुदिङ्नागभे

देविद्याधरांतरे १४ पुरस्कृतोऽभिशस्तारिग्रस्ताग्रेकृतपूजिते भ
गवन्नाजिनेगौर्यास्त्रियांपूज्येतुवाच्यवत् १५ अथभोगवती
नागपुरीनद्योरहैपुमान् रगमातातुकुट्टिन्यांवृसरोगांतरेस्त्रि
यां १६ लक्ष्मीपतिःपुमान्वासुदेवेनरपतावपि व्यतीपातोम
होत्पातेयोगभेदापयोनयोः १७ वनस्पतिर्नाद्रुमात्रेविनापु
ष्पफलद्रुमे विनिपातोनिपातेस्याद्दैवादिव्यसनेपुमान् १८ वि
जृंभितंतुचेष्टायांक्लीबंत्रिषुविकस्वरे विवस्वान्विबुधेसूर्येत
न्नगर्यांविवस्वती १९ वैजयंतोगृहेशक्रध्वजप्रासादयोःपु
मान् वैजयंतीपताकायांजयंतीपादपेपुमान् २० भवेच्छत
धृतिःपुंसिशक्रेचपरमेष्ठिनि शुभ्रदंतीसुदंत्यांस्यात्पुष्पदंतेभ
योषिति २१ समुद्धृतंसमुत्कीर्णेप्यपनीतेचवाच्यवत् सदा
गतिर्नाकिनातनिर्वाणेषुसदीश्वरे २२ सरस्वांश्चनदेचाब्धौ
नान्यवद्रसिकेस्त्रियां वाणीस्त्रीरत्नवाग्देवीगोनदीषुनदीभिदि
२३ मनुपत्न्यामपिसत्यवतीव्यासस्यमातरि नारदर्चीकयोः
पत्न्यांस्त्रियांपुंसिनृपांतरे २४ समुद्रांतातुकार्पासीपृक्कादुरा
लभासुच समाहितःसमाधिस्थेप्युक्तसिद्धांतआहिते २५
निर्विवादीकृतेपिस्यात्प्रतिज्ञातेचवाच्यवत् समाघातोवधेयुद्धे
संख्यावान्पंडितेपुमान् २६ संख्यायुक्तेऽन्यलिंगोऽथसुधाभृ
तिःपुमान्मखे चंद्रेसुभाषितोबुद्धेपुमान्सूक्तेनपुंसकं २७ सू
र्यभक्तस्तुबंधूकेपुंसित्रिष्वर्कपूजके सेनापतिःकार्तिकेयेप्य
नीकाधिपतौपुमान् २८ हिमारातिःपुमानीतिर्ह्रोत्रेकिरणमालि
नि हैमवत्यभयास्वर्णक्षीर्योःश्वेतवचौमयोः २२९॥ तपंच
॥अवलोकितोनालोकनाथेत्रिषुनिरीक्षिते अपराजितईशा
जेष्क्वंतरेनाजितेत्रिषु ३० गिरिकर्णीजयादुर्गाशनपर्णीषुयो
षिति उपधूपितआसन्नमरणेपरिधूपिते ३१ स्याद्गणाधिपतिः
पुंसिशंकरेपिगजानने भवेत्पिपतिषन्पित्सौत्रिषुपुंसिविहंग

मे ३२ पृथिवीपतिस्तुभूपालेनृसभारव्यौषधीपुमान् मूर्धाभि
षिक्तोभूपालेमंत्रिणिक्षत्रियेपिच ३३ यादसांपतिरंभोधौप
श्चिमाशापतावपि वसंतदूतश्चैत्रेस्यात्पिकपंचमरागयो ॥
३४ वसंतदूतीपाटल्यामभियुक्तेचयोषिति ॥ तषट् ॥ अर्धप
रावतश्चित्रकंठेतित्तिरिपक्षिणि ३५ ॥ तसप्त ॥ समुद्रनव
नीतंस्यात्क्लीबपीयूषचंद्रयोः ॥ इतितांतवर्गः ॥ थेकं ॥ थ
रक्षणेमंगलेचसाध्वसेचनपुंसकं शिलोच्चयेपुमानेवक्वचित्तुभ
यरक्षके १ ॥ थद्वि ॥ अर्थोविषयार्थनयोर्धनकारणवस्तुषु
अभिधेयेचशब्दानांनिवृत्तौचप्रयोजने २ आस्था त्वालंबना
स्थानयत्नापेक्षासुयोषिति कंथा मृन्मयभित्तौचतथाप्रावरणां
तरे ३ क्वथः स्याद्दतिदुःखेपिनिष्पाकेपिद्रवस्यच कुथः स्त्री
पुंसयोर्वर्णकंबलेपुंसिबर्हिषि ४ कोथो नानेत्ररोगस्यभेदेच
शठितेत्रिषु ग्रंथो ग्रथनाधनयोःस्याच्छास्त्रासरसंख्ययोः
५ ग्रंथिस्तुग्रंथिपर्णेनाबंधेरुग्भेदपर्वणोः गाथाश्लोकेसं
स्कृतान्यभाषायांगेयवृत्तयोः ६ तीर्थं शास्त्राध्वरक्षेत्रोपाय
नारीरजःसुच अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमंत्रिषु ७ तु
त्थमंजनभेदेस्यान्नीलसूक्ष्मैलयोस्त्रियाम् दुःस्थः स्याद्दुर्ग
तेमूर्खेदुःखेनतिष्ठतित्रिषु ८ प्रस्थोस्त्रियांमानभेदेसानावुन्नि
तवस्तुनि पाथो ऽर्केऽम्भोजलेक्लीबंपृथुः स्यान्महतित्रिषु ९
त्वक्पर्ण्यांकृष्णजीरेऽस्त्रीपुमानग्नौनृपांतरे प्रोथो ऽस्त्रीहय
घोणायांनाकट्यामध्वगेत्रिषु १० मंथः स्यात्पुंसिमंथानेसा
क्तवेचदिवाकरे यूथंतिर्यक्समूहेऽस्त्रीपुष्पभेदेचयोषिति ११
रथः पुमानवयवेस्यंदनेवेतसेपिच वीथी पंक्तौगृहांगेचरूपका
तरवर्त्मनोः १२ संस्थ श्चरेऽवस्थितेस्त्रीस्थितौसादृश्यनाशयोः
सार्थो वणिक्समूहेस्याद्पिसंघातमात्रके १३ सिक्थो भक्त
पुलाकेनामधूच्छिष्टेनपुंसके ॥ थत्रि ॥ अतिथिः कुशपु

त्रेस्यात्पुमानागंतुकेत्रिषु १७ अश्वत्थः पिप्पलद्रौस्यादश्वत्था पूर्णिमातिथौ अव्यथो निर्व्यथेसर्पेचारटीपथ्ययोःस्त्रियां १५ उन्माथः कूटयंत्रेस्यान्मारणे घातकेपुमान् उपस्थः शेफशिश्ने डेतथामदनमंदिरे १६ उद्रथो रथकीलेस्यात्ताम्रचूडाख्य पक्षिणि श्वश्रुर्नास्तुतेकासेकायस्थः परमात्मनि १७ नर जातिविशेषेनाहरीतक्यांतुयोषिति कापथः कुत्सितपथेउशी रेक्लीबमिष्यते १८ गोग्रंथिर्नाकरीषेस्याद्गोष्ठगोजिह्विकौष धौ दमथस्तुपुमान्दंडेदामेचपरिकीर्तितः १९ निशीथस्तु पुमानर्धरात्रेस्याद्रात्रिमात्रके निर्ग्रंथो नग्नकेपिस्यान्निःस्वबा लिशयोरपि २० प्रमथा स्याद्धरीतक्यांहरपारिषदेपुमान् वरूथो रथगुप्तौस्यात् वरूथं चर्मवेश्मनोः २१ मन्मथः कामचिंतायांकपित्थेकुसुमायुधे वयस्या तु स्त्रियांब्राह्मीगु डूच्यामलकीषुच २२ सूक्ष्मैलायांचकाकोल्यांपथ्यालीतरु योस्त्रिषु वमथुः पुंसिवमनेगजस्यकरशीकरे २३ विदथो योगिकृतिनोः शमथः शांतिमंत्रिणोः षड्ग्रंथा तुवचायां स्त्रीस्यात्करंजांतरेपुमान् २४ समर्थस्तुहितेशक्तेसंबद्धे प्यन्यलिंगकः सिद्धार्थस्तुपुमान्शाक्येसिद्धेचसितसर्षपे २५

॥ थचतुः ॥ अनीकस्थो रणगते हस्तिशिक्षाविचक्षणे रा जरक्षिणिचिन्हेचवीरमर्दनकेपिच २६ भवेदतिकथा पार्थ वाच्यश्रद्धेभ्रनष्टयोः चतुष्पथं चतुर्मार्गेसंगमेब्राह्मणेपिना २७ अथ चित्ररथः सूर्यगंधर्वांतरयोःपुमान् दशमीस्थो नष्टवीर्येस्थविरेप्यन्यलिंगकः २८ प्राणनाथोयमेनास्यात्त्रिषु प्राणाधिपेमतः वानप्रस्थोमधूकेपिस्यात्तृतीयाश्रयेपुमान् २९ भवेदुदरथिः पुंसिसमुद्रेचवियन्मणौ ॥ इति थांतवर्गः ॥ ॥०१४

॥ दैकं ॥ दः पुमानचलेदत्तेस्त्रियांशोधनदानयोः छे दोपतापरक्षासुपुमांस्तुदातरिस्मृतः १ ददिः ॥ अब्दः संवत्स

रेवाप्रिवाहमस्तकयोः पुमान् कुंदो स्त्रीसूरणेशस्यमूलेजलधरेपुमान् २ अंदूः स्त्रियांस्यान्निगडेप्रभेदे भूषणस्यच कुंदोमाध्येस्त्रीमुकुंदश्रमिनिध्यांतरेषुना ३ क्रोदः स्यात्तु सिरजसिपेषणेचप्रकीर्तितः गदोभ्रातरिविष्णोःस्याद्रामयेनायुधेगदा ॥ ४ ॥ छदः पलाशेगरुतिग्रंथिपर्णतमालयोः छंदोवशेप्यभिप्रायेधीदापुंसीमनीषयोः ५ नंदि द्यूतांगआनंदेस्त्रीनंदिकेश्वरेपुमान् नदी सरितिशोणादौना नंदा स्यादलिंजरे ६ गौर्यातिथिविशेषेस्त्रीनिधिराजभिदोःपुमान् निंदा स्यादपवादेपिकुत्सायामपियोषिवि ७ पदं शब्देचवाक्येवव्यवसायप्रदेशयोः पादतचिह्नयो स्यानत्राणयोरंकवस्तुनोः ८ श्लोकपादेपिचक्लीबेपुल्लिंगः किरणेपुनः पादोबुध्नेतुरीयांशेशैलप्रत्यंतपर्वते ९ चरणेचमयूखेच वेदा लतांतरेस्मृता भिक्षुकश्यामपिवेद्यांच विंदु दंतक्षतांतरे १० भ्रुवोर्मध्येरूपकार्यप्रकृतौपृषतेपुमान् वेदितर्यन्यलिंगःस्यात भद्रं कल्याणशर्मणोः ११ भेदो द्वैधेविशेषेस्यादुपजापेविदारणे मदोरेतसिकस्तूर्यांगर्वेहर्षेभदानयोः १२ मंदो तीक्ष्णेचमूर्खेचस्वैरेचाभाग्यरोगिणोः अल्पेचत्रिषुपुंसिस्याद्धस्तिजात्यंतरेशनौ १३ मृदुः स्यात्कोमलेऽतीक्ष्णेरदो दंतविलेखने विदा ज्ञानेचनिर्दिष्टामनीषायांचयोषिति १४ वेदः श्रुतौचवृत्तेच वेदिः स्यात्पंडितेपुमान् स्त्रियामंगुलिमुद्रायांस्यात्परिष्कृतभूतले १५ शादः स्यात्कर्दमेशष्पेस्यात् मिश्रमनोज्ञयोः सूद स्तुकथितःसूपकारेचव्यंजनांतरे १६ स्वेद स्तुस्वेदनेघर्मे हृत् क्लीबंबुक्कचित्तयोः ॥ दत्रिः ॥ अंगदः कपिभेदेनाकेयूरे तुनपुंसकं ७ अंगदायाम्यदिग्दंतिहस्तिन्यामपियोषिति अर्द्धेंदुरर्द्धचंद्रेस्यात्कलहस्तनखांकयोः १८ अर्द्धेंदुः स्यादतिप्रौढस्त्रीयोन्यंगुलियोजने अर्बुदोमासकीलेस्यात्तुरुष्कदशकोटिषु १९ महीधरविशेषेनाः धास्पदपदकृत्ययोः आसंदोमासुदेवस्यासनभूमेचयोषिति २० आक्रंदः क्रंदनेन्ता

नेमित्त्रदारुणयुद्धयोः भ्रातर्यपिचपुंसिस्यादामोदो गंधहर्षयोः २०
२१ ककुद्स्त्रीककुदोप्यस्त्रीवृषांकेराड्ध्वनेवरे क्षणदोगणकेस्त्र
त्रीक्षणदाक्षणदंजले २२ कपर्दःखंडपरशोजटाजूटेवराटके क
पर्दोदुस्तिस्थितिकायांकर्णपाल्यामपिस्त्रियां २३ कश्यादूक्षसिपुंसि॰
स्यान्मांसाशिन्यन्यलिंगकः कामदाकामधेनौस्त्रीकामदातरिवाच्यव
त् २४ कुमुद्त्रिषुस्यात्कृपणेकोरवेतुनपुंसकं कुमुदंकैरवेरक्तप
द्मेस्त्रीकुंभिकौषधौ २५ गभार्यांपुंसिदिङ्नागनागशाखामृगांतरे
कुसीदंजीवनेवृद्ध्याक्लीबंत्रिषुकुसीदके २६ कौमुदःस्यात्कार्तिके
स्त्रीचंद्रिकायांतुकौमुदी गोष्पदंगोपदश्वभ्रेगवांचगतिगोचरे २७ गो
विंदो वासुदेवेस्याद्गवाध्यक्षेबृहस्पतौ गोनर्दमपिकैवर्तीमुस्तके
पुंसिसारसे २८ जलदोमुस्तकेमेघेजीवदो वैद्यविद्विषोः नर
द् स्त्रियांप्लवेपिस्यात्कारंडेचविहंगमे २९ तोयदोमुस्तकेमेघेपुमा
नाज्येनपुंसकं दरद्स्त्रियांप्रपातेपिस्यात्कारंडेचविहंगमे ३०
दारदो विषभेदेस्यात्पारदेहिंगुलेपुमान् दायादस्तुभवेत्पुंसिसपिं
डेतनयेपिच ३१ दृषद्निष्पेषणशिलापट्टप्रस्तरयोःपुमान् ध
नदस्तुकुबेरेस्यात्पुल्लिंगोदातरित्रिषु ३२ नलदंस्यात्तुष्परसोशी
रमांसीषुनद्वयोः नर्मदःकेलिसचिवेनर्मदासरिदंतरे ३३ निर्वा
दःस्याल्लोकवादेपरिनिश्चितवादयोः निषादःस्वरभेदेस्याच्चंडालेपीव
रांतरे ३४ प्रमदःसंमदेमत्तेस्त्रियामुत्तमयोषिति प्रसादोऽनुग्र
हेकाव्यगुणस्वास्थ्यप्रसन्नतिषु ३५ प्रणादस्तुपुमांस्तारशब्देचश्रव
णामये प्रसादो देवनृपयोर्गृहेऽप्यवरदा स्त्रियां ३६ कन्यायांवाच्य
लिंगस्तुप्रसन्नेचसमर्द्धके भसदस्त्रीभास्वरेयोनौमर्यादासीम
निस्थितौ ३७ माकंदःसहकारेऽस्त्रीधात्रीमगरभेदयोः मुकुंदो
निधिभिद्विष्णुरत्नभेदेचकुंदुरौ ३८ मेनादस्तुपुमान्केकिमार्जार॰
छगलेषुच विशदःपांडवेरक्ते शरद्स्त्रीवत्सरेप्यृतौ ३९ शारदो
ऽब्देस्त्रियांतोयपिप्पलीसप्तपर्णयोः सस्येक्लीबंशरज्जातनूतनाम्र॰

तिभेत्रिषु ४० षट्पदुस्यात्कीटभेदपुंडरीकाक्षयोःपुमान् संपत्
भूतौगुणोत्कर्षेहारभेदेपिचस्त्रियां ४१ संविदक्रियांप्रतिज्ञायामा
चारज्ञानसंगरे संभाषणेक्रियाकारेसंकेतेनाम्नितोषणे ४२ संभे
दःस्तुटनेसंगेसुनंदारोचनोमयोः ॥ दचतुः ॥ अभिष्यंदोतिवृ
द्धौस्यादास्रावेक्षिगदेपिच ४३ अष्टापदःस्त्रीकनकेशारिणां
फलकेपिच अष्टापदीचंद्रमल्यांशरभेमर्कटेपुमान् ४४ अव
वादस्तुनिदेशेयामाज्ञाविश्रंभयोरपि अभिमर्दस्तुपुंसिस्यादवम
र्देसंपरायेच ४५ एकपदं तत्कालेनपुंसकवर्त्मनिस्त्रीस्यात् क
टुकंदःपुमानशिग्रौशृंगबेरसरोनयोः ४६ कुरुविंदरत्नभेदे
मुस्ताकुल्माषयोःपुमान् अथकोकनदंरक्तकुमुदेरक्तपंकजे ४७
चतुष्पदीतुपद्येनापशौचकरणांतरे भवेज्जानपदोजानपदोपि
जनदेशयोः ४८ तमोनुदग्नीदुर्केना प्रतिपद्स्त्री तिथौमतौ
परिवादोपवादेस्याद्वीणावादनवस्तुनि ४९ प्रियंवदःखेचरेना
प्रियवाचितुवाच्यवत् पीठमर्दोतिधृष्टेस्यान्नायकस्यप्रियेपिच ॥
५० पुटभेदोनदीवक्रेपत्तनात्तोद्ययोरपि महानादःकुंजरेस्याद्दु
र्दुकाब्देमहास्वने ५१ मुचुकुंदोवृक्षभेदेमांधातृतनयेपिच मे
घनादस्तुवरुणेतनयेरावणस्यच ५२ विशारदःपंडितेचधृष्टे
विष्णुपदंतुखे क्षीरोदेचस्त्रियांगंगारविसंक्रांतिभेदयोः ५३ श
शबिंदुःपुमान्वासुदेवेराजांतरेपिच शतानंदोमुनेर्भेदेदेवकीनं
दनेपिच ५४ शतह्रदास्त्रियांवज्रेसौदामिन्यांचकीर्तिता सम
र्यादःसमीपेनामर्यादासहितेत्रिषु ५५ ॥ दपंच ॥ भवेद्दुपनिष
द्धर्मवेदांतविजनेस्त्रियां सहस्रपादःकारंडेमार्तंडेयज्ञपूरुषे
५६ ॥ इतिदांतवर्गः ॥ धेकं ॥ धोनाधर्मेकुबेरेचक्लीबंतुवसुनि
स्मृतं धौधाचब्रह्मणिख्यातोधातुःस्याद्धारकेपिच धीर्ज्ञानेज्ञा
नभेदेपिधूःस्मृताधूननेस्त्रियां ॥ धद्वि ॥ अर्द्धंसमासेखंडेना
ऽब्धिर्नासरसिवारिधौ २ अंधःस्यात्तिमिरेक्लीबंचक्षुर्हीने ॥

भिधेयवत् आधिः पुमांश्चित्तपीडाप्रत्याशाबंधकेषु च ३ व्यसने
चाप्यधिष्ठाने विद्धू मातपदीप्रयोः ऋद्धं संपन्नधान्येच सुसमृद्धेच
वाच्यवत् ४ ऋद्धिस्तुस्त्र्योषधीभेदे समृद्धावपियोषिति गंधः
प्रतिवेश्यामोदलेशसंबंधगंधके ५ गाधः स्नानेच लिप्सायां गोधात
लनिहाकयोः दधि क्षीरोत्तरावस्थाभावेस्त्रीवासमर्जयोः ६ दग्धं
पुष्टेऽन्यलिंगस्यात्स्थितार्कदिशि च स्त्रियां दिग्धो विषाक्तवाणेस्या
त्पुंसिलिप्तेऽन्यलिंगकः ७ दुग्धं प्रपूरितेक्षीरे दुग्धीक्षीरविकौषधौ
दोग्धार्थोपजीविके वीवत्सगोपालयोः पुमान् ८ धन्ध्रो बद्धेतथाहृते
बंध आधौ च बंधने बंधुस्यात्पुंसि बंधूके मित्रे भ्रातरि बांधवे ९ बा
धादुःखे निषेधे च बुधः सौम्ये च पंडिते बुद्धो जिने लब्धपर्णे पुंसिस्या
द्बुधितेऽन्यवत् १० बोधिः पुंसि समाधेश्च भेदे पिप्पलपादपे मधुपु
ष्परसे क्षौद्रे मद्येनातु मधुद्रुमे ११ वसंतदैत्यभिच्चैत्रेस्यात्जीवंत्यांतु
योषिति सिद्धं चित्ताभिसंक्षेपे क्लीवमालस्यवित्तयोः १२ मुग्धस्तुसुं
दरे मूढे नधाबुद्धौ न्वितेपुमान् राधो मासांतरे राधा चित्रभेदे च धन्वि
नां १३ गोपीविशाखामलकी विष्णुक्रांतासुविद्युति लुब्ध आकांक्षि
णिव्याधे वधूः स्त्रीशारिवौषधौ १४ स्नुषा शठीनवोढासु भार्यापृक्कांग
नासु च व्याधिः कुष्ठे च रोगेना व्याधो मृगयुदुष्टयोः १५॥ ताराम येखेच
विधुर्ना कर्पूरे दुह्मरिधु विद्धं स्याद्वेधिते क्षिप्ते सदृशे बाधिते त्रिषु १६
विधिर्नानियतौ काले विधाने परमेष्ठिनि विधा गजासने ऋद्धौ प्रकारे
वेतने विधौ १७ वृद्धो जीर्णे प्रवृद्धे त्रिषु क्लीवंतु शैलजे वृद्धिस्तुव
र्द्धने योगेप्यष्टवर्गौषधांतरे १८ कालांतरे चाभ्युदये समृद्धावपियोषि
ति श्रद्धा ऽदरे च कांक्षायां श्राद्धं श्रद्धान्विते त्रिषु १९ हव्यकव्यवि
धौ क्लीबं शुद्धं स्यात्त्रिषु केवले निर्दोषे च पवित्रे च संधा स्थितिप्रति
ज्ञयोः २० स्पर्द्धा संघर्षणेपि स्यात्साम्येऽक्रमसमुच्चतौ संधिः पुमा
नसुरंगायां भगे संघट्टनेपि च २१ रूपकानां मुखाद्यंगे सावकाशेपि
कीर्तितः स्कंधः स्यान्नृपतौ वंसे संपरायसमूहयोः २२ कायेतरुप्र

कांडेचभद्रादौछंदसोभिदि साधुर्वार्धुषिकेचारौसज्जनेचाभिधेयव
त् २३ सिद्धोनाव्यासादौभेदेयोगस्यदेवयोनेश्च त्रिषुनिष्पन्नेस्निग्ध
स्नेहपुतेचिक्कणेपिस्यात् २४ सिंधुर्वमथुदेशाब्धिनदेनासरितिस्त्रि
या सिद्धिःस्त्रीयोगनिष्पत्तिपादुकांतर्द्धिवृद्धिषु २५ सुधा स्त्रीलेपने
मूर्व्यास्नुह्योगंगेष्टकामृते ॥ धत्रिः ॥ अवधिस्त्ववधानेस्यात्सीम्निका
लेबिलेपुमान् २६ अगाधमतलस्पर्शेत्रिषुश्वभ्रेनपुंसकं अनद्धं
मुरजादौचक्लीबंस्यात्सदितेत्रिषु २७ आविद्धोवाच्यलिंगःस्यात्कु
टिलेचपराहते आबद्धोदृढबंधेस्यात्प्रेमालंकारयोरपि २८ उत्से
धस्तूच्छ्रयेनस्त्रीक्लीबसन्नहनेपिच उपाधिर्धर्मचिंतायांकुटुंबव्या
पृतेछले २९ विशेषणेपुंस्युपधि पुंसिज्याजरथांगयोः कबंधःस्त्री
क्रियायुक्तव्यपमूर्धकलेवरे ३० क्लीबजलेपुंस्युदरेबाहुरक्षोविशेष
यो दुर्विधोवाच्यलिंगःस्याद्दुर्गतेपिखलेपिच ३१ न्यग्रोधस्तुपुमा
न्व्यामवटयोश्वशमीतरौ न्यग्रोधीतूपचित्रायांनिरोधोनाशरोधयोः
३२ निषधःकठिनेदेशेतद्राजेपर्वतांतरे परिधिर्नायज्ञियद्रुशाखा
यामुपसूर्यके ३३ प्रसिद्धोभूषितेख्याते प्रणिधिर्नानुचरेचरे मा
गधी स्त्रीकणायूथ्योर्नाच्यवन्मगधोद्भवे ३४ पुंसिवैश्यात्सुतेत्रिया
जेशुक्लजीरकवंदिनोः विवधोवीवधश्चापिपर्याहारेध्वभावयोः ३५
विश्रब्धोनुद्भटेपिस्याद्गाढविश्वस्तयोस्त्रिषु विबुधो देसुरेवीरुत्सु
तविटपयोस्त्रिया ३६ सन्नद्धो वर्मितेव्यूढेसंबाधःसंकटेभगे
सन्निधिसन्निधानेपिपुमानिंद्रियगोचरे ३७ संसिद्धिःप्रकृतौसिद्धौ
मदोद्यामपिस्त्रियां संबोधोबोधनोक्षेपसमाधिर्नासमर्थने ३८
ध्याननीवाकनियमेकाव्यस्यचगुणांतरे ॥ धचतुः ॥ अवरोधस्ति
रोधानेराजदारेषुतद्गृहे ३९ अवष्टब्धोविदूरेस्याद्दाक्रांतेचावलंबि
ते अनुबंधस्तुबंधेस्याद्दोषोत्पादेविनश्वरे ४० मुख्यानुयायिबाले
चप्रकृतस्याविवर्त्तने अनुबंधी तुहिक्कायांतृष्णायामपियोषिति
४१ अनिरुद्धंउषानाथेपुंसिचारबंधनेन्यवत् आशाबंधःसमा

श्वासेपुंसिमर्कटजालुके ४२ दुष्टगंधःसुगंधोस्यात्त्रिषुक्लीबंतुवालु
के दुस्सुगंधाकोकिलाक्षेकौष्ट्यांकाशेचगोक्षुरे ४३ उपलब्धिर्मतौ
प्राप्तावपिज्ञानेचयोषिति उग्रगंधाजमोदायांवचायांचिक्किकौषधौ ४४ का
लस्कंधस्तमालेस्यात्तिंदुकेजीवकद्रुमे तीक्ष्णगंधावचाराजिकयोः
शोभांजनेपुमान् ४५ तृणगोधाचित्रकोलेकृकलासेपियोषिति पा
रिव्याधस्तुपुंसिस्याद्वेतसेचद्रुमोत्पले ४६ ब्रह्मबंधुरधिक्षिप्तेनि
र्देशेब्राह्मणस्यना महौषधंतुशुंठ्यांस्याद्विषायांलशुनेपिच ४७
समुन्नद्धःसमुद्भूतेपंडितंमन्यगर्विते॥ धपंच॥ योजनगंधाकस्तू
र्यांसितायांव्यासमातरि ४८ ॥इतिधांतवर्गः॥ नैकम् ॥ नःपु
मान्सुगतेबंधेहरिंडेप्रस्तुतेपिच॥ नद्विः॥अग्निर्वैश्वानरेपिस्याच्चि
त्रकाख्यौषधौपुमान् १ अन्नंभक्तेचभुक्तेस्याद्दिनःपर्यौनृपार्कयोः
उन्नंक्लिन्नेचसुरतेकृत्स्नंसर्वांबुकुक्षिषु २ घनंस्यात्कांस्यताला
दिवाद्यमध्यमनृत्ययोः नामुस्ताभ्रौघदार्ढ्येषुविस्तारेलोहमुद्गरे॥
३ त्रिषुसांद्रेदृढेचाथचिह्नंलक्ष्मपताकयोः चीनोदेशांशुकव्रीहि
भेदेतंतौमृगांतरे ४ छन्नंतुरहसिक्लीबंछादितेवाच्यलिंगवत् ॥
छिन्नंकृत्तेत्रिलिंगंस्याद्गुडूच्यामपियोषिति ५ जनोलोकेमहर्लो
कात्परलोकेचपामरे जनीसीमंतिनीबध्वोरुत्पत्तावोषधीभिदि
६ जन्हुःस्यात्पुंसिराजर्षिभेदेचमधुसूदने ज्यानिजीर्णेचहानौच
तटिन्यामपियोषिति ७ जिनोर्हतिचबुद्धेचपुंसिस्याज्जित्वरेत्रिषु
ज्योत्स्नाचंद्रातपेपिस्याज्ज्योत्स्नाशुक्लनिशिस्मृता ८ ज्योत्स्नीपटो
लिकायांस्याज्ज्योत्स्नायुक्तनिशिस्त्रियां तनुःकायेत्वचिस्त्रीस्यात्त्रि
ष्वल्पेविरलेकृशे ९ दानंगजमदेत्यागेपालनच्छेदशुद्धिषु दानुर्दा
तरिविक्रांतेदीनास्त्रीमूषिकेस्त्रियां १० वाच्यवद्दुर्गतेभीतेद्युम्नं
वित्तेबलेपिच धनुःपुमान्पियालद्रौराशिभेदेशरासने ११ धनंतु
गोधनेवित्ते धानाभृष्टयवेपिच धान्याकेभिनवोद्भिन्ने धेनीनद्यां
नदेपुमान् १२ नग्नोवंदिक्षपणयोःपुंसित्रिषुदिवाससि न्यूनंग

र्ह्योनयो पानंपीतिभाजनरक्षणे १३ भानुर्नाकिरणेसूर्येभिन्नः स्यात्त्रिषुदारिते संगतेऽन्यत्रफुल्लेच मा न श्चित्तोन्नतौग्रहे १४ क्लीबंप्रमाणेप्रस्थादौमीनोराश्यंतरेझषे मुनिःपुंसिवसिष्ठादौवंक सेनतरौजिने १५ मृत्स्नामत्सातुवर्योस्त्रीयानं स्याद्वाहनेगतौ॥ योनिःस्त्रीपुंसयोःस्यादाकरेस्मरमंदिरे १६ रत्नं स्वजातिश्रेष्ठे पिमणावपिनपुंसक रास्नाचस्याद्भुजंगाख्यांएलापर्ण्यामपिस्त्रि याम् १७ लग्नं राश्युदयेक्लीबसक्तलज्जितयोस्त्रिषु वस्नस्त्व विक्रयेपुंसिवेतनेस्यान्नपुंसक १८ वनं नपुंसकंनीरेनिवासाल यकानने वह्निः वैश्वानरेऽपिस्याच्चित्रकाख्यौषधौपुमान् १९ वा नःशुष्कफलेशुष्कस्यूतिकर्मकटेगतौ विन्नंविचारितेलब्धेब्रध्नो नामूलरुग्रयोः २० श्वापुमान्कुक्कुरेख्यात-स्थानभेदेचवास्तुन॥ शीनोमूर्खेचाजगरेश्येन पक्षिणिपांडुरे २१ स्वप्नःस्वापेप्रसुप्त स्यविज्ञानेदर्शनेपुमान् सानुस्त्रीवनेप्रस्थेवात्यामार्गाग्रकोवि दे २२ स्थानंसादृश्येऽवकाशेस्थितौवृद्धिक्षयेतरे स्यानंस्निग्धेप्र तिध्वानेघनत्वालस्ययोरपि २३ स्नानं स्नानीयेऽभिषवेसूनंप्र सवपुष्पयो सूनापुत्र्यांवधस्थानेगलशुंडिकयो स्त्रियां २४ सूनुःपुत्रेनुजेर्केनास्नुस्नु किरणसूर्ययोः ह्नु र्हद्विलासिन्यां सूनावज्रेगदेस्त्रियां २५ द्वयोःकपालावयवेह्लीनं गर्ह्योनयोस्त्रि षु ॥नत्रिः॥अंजनेकज्जलेचाक्तौसौवीरेचरसांजने २६ पुंसि ज्येष्ठादिग्गजयोरंजनावानरीभिदि अंजनीलेप्यनार्याञ्चावनंश्री तौचरक्षणे २७ अयनंपथिभानोरप्युदग्दक्षिणतोगतौ अपानं तुगुदेक्लीबंपुंसिस्यात्तस्यमारुते २८ असनं क्षेपणेक्लीबंपुंसिस्या ज्जीवकद्रुमे अगनंप्रांगतेयानेकामिन्यामंगनामता २९ अर्जुनः ककुभेपार्थेकार्तवीर्यमयूरयोः मातुरेकसुतेपिस्यात्सुल्लिंगोधव लेऽन्यवत् ३० नपुंसकंतृणेनेत्ररोगेचाप्यर्जुनीगवी उषायाबा हुदानद्यांकुट्टिन्यामपिचक्वचित् ३१ अम्लानो महासहायानान्य

लिंगस्तुनिर्मले अशोघ्नी तालमूल्यांस्या दर्शोघ्नः सूरणेपिच ३२ असिक्नीस्यादवृद्धांतःपुरप्रेष्यानदीभिदोः अशनिःस्त्रीपुंसयोः स्याच्चंचलायांपवावपि ३३ अरत्निर्नासप्रकोष्ठततांगुलिकरेपिच कफोणावप्यथालीस्याद्वृश्चिकेभ्रमरेपुमान् ३४ अर्थी पुमान्याचकेस्यात्सेवकेचविवादिनि अध्वानापथिसंस्थानेस्यादयस्कंदकालयोः ३५ अर्वातुरंगमेपुंसिकुत्सितेवाच्यलिंगकः आसनंद्विरदस्कंधेपीठयात्रानिवर्तने ३६ आसनीविपणौस्त्रियामासनोनातुजीरके आदानंग्रहणेपिस्यादलंकारेचवाजिनाम् ३७ आपन्नः सविपत्तौचप्राप्तेवाच्यवदीरितः आत्मापुंसिस्वभावेपिप्रयत्नमनसोरपि ३८ धृतावपिमनीषायांशरीरब्रह्मणोरपि आलानंकरिणांबंधस्तंभेरज्जौचनस्त्रियां ३९ ईशानंज्योतिषिक्लीबंपुल्लिंगःस्यात्त्रिलोचने उत्तानमगभीरेस्यादूर्ध्वास्यशयितेत्रिषु ४० उत्थानमुद्यमेतंत्रेपौरुषेपुस्तकेरणे प्रांगणोद्गमहर्षेषुमलरोगेपिनद्वयोः ४१ उद्यानंस्यान्निःसरणेवनभेदेप्रयोजने उदानोप्युदरावर्तेवायुभेदेभुजंगमे ४२ उद्धानमुद्गतेवाच्यलिंगंचुल्यांनपुंसकम् ॥ ओदनंनस्त्रियांभक्तेबलायामोदनी स्त्रियां ४३ कमनःकामुकेकामेऽभिरूपेऽशोकपादपे कंपनंनद्वयोःकंपेकंप्रेस्यादभिधेयवत् ४४ कठिनमपिनिष्ठुरेस्यात्स्तब्धेपित्रिषुनपुंसकंस्थाल्यां कठिनीखटिकायामपिकठिनागुडशर्करायोंच ४५ क्रंदनंरोदनेपिस्यादाह्वानेप्यथकल्पना करिणःसज्जनायांस्त्रीक्लीबंक्लृप्तौचकल्पने ४६ कर्तनंनद्वयोश्छेदेनारीणांसूत्रनिर्मितौ कर्मास्त्री व्याप्यक्रिययोः कदनंमर्दपापयोः ४७ कांचनःकांचनारेस्याच्चंपकेनागकेसरे उदुंबरेचधत्तूरेहरिद्रायांचकांचनी ४८ क्लीबेक्लकेसरे हेम्निकामिनीभीरुनंदयोः कामीतुकामुकेचक्रवाकेपारावतेपिच ४९ कानीनःकन्यकाजाततनयेव्यासकर्णयोः काकिनीपणपादेपिमानपादवराटके ५० काननंविपिनेगेहेपरमेष्ठिमुखेपिच कुद्दनंमृत्तिका

भांडविशेषेकाचभाजने ५१ कुहनादंभचर्यायामीर्ष्यालौकुहनंत्रि
षु कृतीस्यात्संडित्तेयोग्येकेतनंतुनिमंत्रणे ५२ गृहेकेतौचकृत्ये
थ केशीकेशवतित्रिषु दैत्येनाचौरपुष्प्यांस्त्रीकौलीनशुद्धजन्य
योः ५३ कुकर्मणिकुलीनत्वेयुद्धेपश्वहिपक्षिणां कौपीनंस्याद
कार्येचचीरगुह्यप्रदेशयोः ५४ खलिनीखलवृंदेस्यात्तालपर्ण्या
मपिस्त्रियां खंजनंखजरीटेस्त्रीसर्षप्यांखंजनंगतौ ५५ खड्गी
नागडकेमंजुघोषेखड्गधरेत्रिषु गर्जनं निनदेकोपेगहनं कलिले
त्रिषु ५६ नपुंसकंगव्हरेस्याद्दुःखकाननयोरपि गंधनमुत्साहे
स्यात्प्रकाशनेसूचनेपिहिंसायां ५७ ग्रामीन शुनि:काकेपुंसित्रिषु
सभृतेग्रामैः ग्रावातुप्रस्तरेपृथ्वीधरेपुंस्यथगृंजनम् ५८ विषद
ग्धपशोमांसेक्लीबंपुंसिरसोनके गोस्तनोहारभेदेनाद्राक्षायांगो
स्तनीस्त्रियाम् ५९ गोमीशृगालेपुंसिस्यात्रिपुगोमत्युपासके॥
घटनाचलनावृत्योश्चंदनीतुनदीभिदि ६० चंदनोःस्त्रीमल
यजेभद्रकाल्यांनपुंसकं चलनंभ्रमणेकंप्येकंपेतुवाच्यलिंगक
म् ६१ चलनीवस्त्रयोधिन्यांवारिभेदेपिचक्वचित् चक्री जालि
कभित्कोककुलालाजाहिसूचके ६२ चर्मी फलकपाणौस्याद्भूर्जे
भृंगरिटावपि चर्मकृतौचफलकेचेतनासंविदिस्त्रियाम् ६३ वा
च्यवत्प्राणयुक्तेःथ छद्म व्याजापदेशयोः छर्दनंवमनेक्लीबं
निंबालंबुषयोःपुमान् ६४ छदनं छदनेपक्षेपिधाने छेदनं भि
दि कर्तनेजगनुःपुंसिजंतौवेश्मानलेपिच ६५ जवनंतुस्यदेवे
गिहयेनावेगिनित्रिषु जननीतुदयामात्रोजननंवंशजन्मनो
६६ जयनंस्यात्तुरंगादिसन्नाहेविजयेऽपिच जघनंचस्त्रियाः
श्रोणिपुरोभागेकटावपि ६७ ज्ञानीस्यात्पुंसिदैवज्ञेज्ञानयुक्ते
न्यलिंगकः जीवनंवर्त्तनेनीरप्राणधारणयोरपि ६८ जीवनी
जीवनाचापिजीवंतीभेदयोःक्रमात् तपनोरुकरेपिस्याद्भ्रा
स्करेनिरयांतरे ६९ तरलःपवनेपुंसिसुवत्यांतलुनीस्मृता॥

तलिने विरले स्तोके स्वच्छेपि वाच्यलिंगकं ७० तमोघ्नः सूर्यवन्ह्यौ
द्बुबुद्धशंकरविष्णुषु त्यागी दातरि शूरेऽथ तेवनं केलिकानने ७१
क्रीडायां तेमनं त्वार्द्रीकरणे व्यंजनेपि च ॥ तेजनः पुंसि वंशे स्या
त्तेजनी तृणपूलके ७२ तोदनं व्यथने तोत्रे दंशनं दंशवर्मणोः
॥ दर्शनं नयनस्वप्नबुद्धिधर्मोपलब्धिषु ७३ शास्त्रदर्पणयोश्चा
थ दमनः पुष्पधीरयोः दशनः शिखरे दंते कवचे तु नपुंसकं ७४
दहनश्चित्रके भल्लातकेऽग्नौ दुष्टचेष्टिते दशानं ज्योतिषि क्लीबं
पुल्लिंगः स्याद्विरोचने ७५ देवनं व्यवहारे स्याज्जिगीषाक्रीड
योरपि देवनोऽक्षेषु पुंसि स्याद्ध्वजी तु पृथिवीधरे ७६ रथब्रा
ह्मणयोश्चापि भुजंगमतुरंगयोः धन्वी धनुर्धरेपि स्याद्दर्हणे
ककुभद्रुमे ७७ धन्वा तु मरुदेशे ना क्लीबं चापे स्थलेपि च धम
नोऽनले भस्त्राध्मापकः क्रूरयोस्त्रिषु ७८ धमनी तु शिरा
हट्टविलासिन्योश्च योषिति धावनं गमने शुद्धौ पृश्निपर्ण्यां तु
धावनी ७९ धाम देहे गृहे रश्मौ स्थाने जन्मप्रभावयोः नंदनं
वासवोद्याने नंदनो हर्षके सुते ८० नंदी हरप्रतीहारे गर्दभां
डे वनद्रुमे नंदिन्युमायां गंगायां ननांदृधेनुभेदयोः १ नलि
नी पद्मिनी व्योमनिम्नगा कमलाकरे नपुंसकं नीलिकायां न पुं
सि सरसीरुहे ८२ निदानं कारणे वत्सदामादिकारणक्षये
निधनं स्यात्कुले नाशे प्रधनं दारणे रणे ८३ पवनं कुंभका
रस्य पाकस्थाने नपुंसकं निष्पावमारुतो पुंसि प्रज्ञानं बुद्धि
चिन्हयोः ८४ प्रधानं स्यान्महामात्रे प्रकृतौ परमात्मनि प्र
ज्ञायामपि च क्लीबमेकत्वे नूत्तमे सदा ८५ पद्मिनी पद्मसंघा
ते स्त्री विशेषे सरोरुहे प्रसन्ना स्त्री सुरायां स्यात्स्वच्छसंतुष्ट
योस्त्रिषु ८६ प्रसूनो वाच्यवज्जाते क्लीबं तु फलपुष्पयोः प
त्री श्येने पत्ररथे कांडद्रूरथिकाद्रिषु ८७ पर्व क्लीबं महे ग्रंथौ
प्रस्तावे लक्षणांतरे दर्शप्रतिपदोः संधौ विषुवत्प्रभृतिष्वपि ८८

सूक्ष्मसूत्रादिसूक्ष्मांशेकिंजल्केनेत्रलोमनि पाठिनोमीनभेदे
स्यात्पाठकेगुग्गुलद्रुमे ८९ पावनं तुजलेकृच्छ्रेनाध्यासेपावके
पिच पाचनं दशमूल्यादौप्रायश्चित्तेचनानले ९० वाच्यवत्पा
चयितरिहरीतक्यांतुयोषिति पाशी व्याधेचवरुणेपिशुनं कुंकुमे
पिच ९१ कपिवक्त्रेचकालेनासूचकक्रूरयोस्त्रिषु पृक्कायांपिशुना
स्त्रीस्यात्पीतनं पीतदारुणि ९२ कुंकुमेहरितालेचपुमानाम्रातके
मतः पूतनातुहरीतक्यादानवीरोगभेदयोः ९३ पृतना तुस्त्रियां
सेनामात्रसेनाविशेषयोः प्रेत्वानावासवेवातेप्रेमा स्त्रीस्नेहकर्षयोः
९४ फलिन्यग्निशिखायांस्त्रीफलिन्याफलिनेत्रिषु फाल्गुनस्तुगु
डाकेशेनदीजार्जुनभूरुहे ९५ तपस्यसेज्ञेमासेतत्पूर्णिमायांतु
फाल्गुनी ब्रह्म तत्त्वतपोवेदेनद्वयोःपुंसिवेधसि ९६ ऋत्विग्यो
गभिदोर्विप्रेबंधनं वधबंधयोः बेदनीनतिजीवातुकटीमाचल
कर्मसु ९७ वाहिनीस्यात्तरंगिण्यांसेनासैन्यप्रभेदयोः वाणिनी
नर्तकीमत्ताविदग्ध वनितासुच ९८ बुधानस्तुगुरौविज्ञेबोध
नंगंधदीपने बोधिनीबोधिपिप्पल्योर्भर्म स्यात्कांचनेभृतौ ९९
भंडनंकवचेयुद्धेखलीकारेपिनद्वयोः भट्टिनीद्विजभार्यायांनाट्ये
क्त्यांराजयोषिति १०० भवनं स्याद्गृहेभावे भाजनम्योग्यपात्रयो
ःभावना तुनताध्यानेपर्यालोचेधिवासने १ भुवनं पिष्टपेपिस्या
त्सलिलेगगनेजले भोगीभुजंगमेपिस्याद्ग्रामपात्रेनृपेपुमान् २ वि
हायमहिषीमन्यराजयोषितिभोगिनी मदनःस्मरवसंतद्रुभिद्रूल्लू
रसिकृष्यके ३ मलनःपटवासेनामर्दनंतुनपुंसकं मलिनं दूषितेकृ
ष्णोऽस्तुमस्यांतुयोषिति ४ मंडनं भूषणेक्लीबंस्यात्रिष्वलंकरिष्णु
नि मार्जनंनद्वयोर्मार्ष्टौपुंसिस्याल्लोध्रशाखिनि ५ मालिनीमातृ
कावृत्तभिदोर्मालिकयोषिति गौरीचंपानगर्योश्चमंदाकिन्यानदीभि
दि ६ मानिनी तुस्त्रियांफल्यांमानीमानवतित्रिषु मिथुनं तुद्व
योराशिभेदेस्त्रीपुंसियुग्मके ७ मुंडनं वपनेत्राणमेहनं मूत्रशि

र्थयोः मैथुनं सुरतेपिस्यात्संगतेपिनपुंसकं ८ यमनेबंधनेचोप
रतौक्लीबंयमेपुमान् यवनोदेशभेदेनावेगिवेगाधिकाश्वयोः९ या
वान्योषधिभेदेस्त्रीवाच्यवल्लिंगिनिस्मृता यापनंवर्त्तनेकालक्षेपे
निरसनेपिच १० युवास्यात्तरुणेश्रेष्ठेनिसर्गबलशालिनि युंजानः
सरथौविप्रेयोजनंपरमात्मनि ११ चतुःक्रोश्यांचयोगेथरसनं
स्वदनेध्वनौ जिह्वायांतुनपुंसिस्याद्रास्नायांरसनास्त्रियाम् १२
रंजनोरागजननेरंजनंरक्तचंदने शुंडारोचनिकानीलीमंजिष्ठासु
चरंजनी १३ रजनीनीलिनीरात्रिहरिद्राजतुकासुच राधनंसाध
नेप्राप्तौराधनाभाषणेस्त्रियाम् १४ राजाप्रभौचनृपतौक्षत्रियेर
जनीपतौ यक्षेशक्रेचपुंसिस्याद्रागीरक्तेपिकामुके १५ रेचनीत्रि
वृतादंत्योरोचनीकर्कशोस्त्रियाम् रोचनारक्तकल्हारेगोपित्तवरयो
षितोः १६ रोचनःकूटशाल्मल्यांपुंसिस्याद्रोचकेत्रिषु रोदनंक्रंद
नेस्त्रेपिदुरालभौषधौस्त्रियाम् १७ रोहीरोहितकेश्वत्थवटपादप
योःपुमान् लंघनंतूपवासेस्यात्क्रमणेप्लवनेपिच १८ ललना
कामिनीनारीभेदजिह्वासुयोषिति लक्ष्मचिन्हेप्रधानेचलांछनं
मानचिन्हयोः १९ खेलनेछर्दनेभूर्जेलिपिन्यासेथवर्जनम् हिं
सात्यागयोर्वपनंवीजाधानेचमुंडने २० वसनंछादनेवस्त्रेव
मनंछर्दनेर्दने वर्द्धनंवृद्धिवर्द्धिस्युछेदेघट्यांतुवर्द्धिनी २१ व्यं
जनंतेमनेचिन्हेश्मश्रुण्यवयवेह्नि व्यसनंत्वशुभेसक्तोपानस्त्री
मृगयादिषु २२ दैवानिष्टफलेपापेविपत्तौनिष्फलोद्यमे वर्तनोवाम
नेक्लीबंवृत्तोस्त्रीप्रेषणाध्वनोः २३ नपुंसितूलनालायांनर्कुपीठेचजी
वने वर्तिष्णौत्रिषुवज्री तुबुद्धेदेवाधिपेपुमान् २४ वचक्नुस्तुप
मान्विप्रेवावदूकेभिधेयवत् वर्णीस्याल्लेखकेचित्रकरेपिब्रह्मचा
रिणि २५ वर्ष्मदेहप्रमाणातिसुंदराकृतिषुस्मृतम् वर्त्मनेत्रछदे
मार्गेवाजीवाणाश्वपक्षिषु २६ वामनोप्यत्निखर्वेचत्रिषुपुंसितुदि
ग्गजे हराबंकोटवृक्षेथवासनंधूपनेपिच २७ वासिपान्योचवस्त्रे

चपत्याशाज्ञानयोस्त्रियाम् वाग्मी पटौसुराचार्येविज्ञानंज्ञानक
र्मणो. २८ वितुन्नंसुनिषण्णेचशैवालेचनपुंसकं विमानोव्यो
मयानेचसार्वभौमगृहेपिच २९ पोटकेयानपात्रेचपुंनपुंसकयोर्म
तः वितानोयज्ञउल्लोचेविस्तारेपुन्नपुंसक ३० क्लीबंवृत्तविशेषेस्या
त्त्रिलिंगोमंततुच्छयोः विक्लिन्नोजरसाजीर्णेशीर्णेचार्द्रेचवाच्यवत्
३१ विपन्नं विपदाक्रांतेत्रिषुपुंसिभुजंगमे विच्छिन्नंचसमालब्धे
विभक्तेप्यभिधेयवत् ३२ विलग्नं नस्त्रियांमध्येत्रिषुस्याल्लग्न
मात्रके विषघ्न स्तुशिरीषेनागुडूचीस्त्रिरतोःस्त्रियां ३३ व्युत्था
नं स्वातंत्र्यकृत्येविरोधाचरणेपिच वृजिनं कल्मषेक्लीबेकेशेनाकु
टिलेत्रिषु ३४ वृषाकर्णेमहेंद्रेना वेदना ज्ञानदुःखयोः वेष्टनं
कर्णशष्कुल्यामुष्णीषेमुकुटेवृतौ ३५ व्योम वारिणिचाकाशेभा
स्करस्यार्चनाश्रये शकुनः पुंसिविहगेसौबलेकरणांतरे ३६ श
यनं सुरतेनिद्राशय्ययोश्चनपुंसके शमनं शांतिबधयो शमनः
श्राद्धदेवते ३७ श्वसनं स्वसितेपुंसिमारुतेमदनद्रुमे॥ शकुन
स्तुपुमान्पक्षिमात्रपक्षिविशेषयो ३८ शुभशंसिनिमित्तेचशाकु
नंस्यान्नपुंसकं शंखिनीश्वेतचुक्रायांचोरपुष्प्यांवधूभिदि ३९
शंखी हरौसमुद्रेनाशंखवत्यभिधेयवत् शतघ्नी शस्त्रभेदेस्या
त्दृश्चिकाल्यांकरंजके ४० शासनंराजदत्तोर्व्यांलेखाज्ञाशा
स्त्रशांतिषु शार्ङ्गीस्यात्पादपेवेदेतुरुष्काख्यजनेपुमान् ४१
शिखी वन्हौबलीवर्देशरेकेतुग्रहेद्रुमे मयूरेकुक्कुटेपुंसिशिखा
वत्यन्यलिंगकः ४२ शिल्पी तुवाच्यवत्कारौस्त्रियाकोलदलो
षधौ शृंगी शृंगयुतेनागेवृषपर्वतयोरपि ४३ श्लेष्मघ्नी मल्लि
कायांज्योतिष्मत्यांचयोषिति शोभनोयोगभेदेनासुंदरेवाच्यलिं
गक ४४ सवनं त्वध्वरेस्नानेसोमनिर्दलनेपिच स्तननं ध्वनि
मात्रेस्यान्मेघशब्देचकुंथिते ४५ समानं सत्समेकेषुत्रिषुना
माभिमारुते संतान. संततौगोत्रेस्यादपत्येसुरद्रुमे ४६ स्प

र्शनो मारुते पुंसि दाने स्पर्शनं पुंसकम् संस्थानमाकृतौ मृत्यौ सन्नि
वेशे चतुष्पथे ४७ स्यंदनं तु स्नुतौ नीरे तिनिशे ना रथेऽस्त्रियाम्॥
सज्जनं तु भवेत्क्लीबमुपरक्षणघट्टयोः ४८ वाच्यलिंगं कुलीने स्या
त्कल्पनायां तु योषिति संधानं स्यादभिषवे तथा संघट्टनेऽपि च ४९
संपन्नं साधितेऽपि स्यात्संपत्तिसहिते न्यवत् संधिनी वृषभाक्रांता
कालदुग्धोस्त्रयोः स्त्रियाम् ५० सन्नः स्यान्मेदिरे नीरे सं न्यानं स्था
दनं स्मुके सदनं मंदिरे तोये स्वामी प्रभुविशाखयोः ५१ सादी तु
रंगमातंगरथारोहेषु दृश्यते स्थापनं रोपणे पुंसि वने पाठोषधौ स्त्रि
यां ५२ सावनो यज्ञकर्मांते यजमानप्रचेतसोः साधनं मृतसंस्कारे
सैन्ये सिद्धौषधौ गतौ ५३ निर्वर्तनोपायमेढ्रे दापनेऽनुगमे धने सा
मक्लीबमुपायस्य भेदे वेदांतरेऽपि च ५४ सीमा घाटस्थितिक्षेत्रे
ष्वंडकोषेऽपि च स्त्रियां सूचना व्यधने दुष्टे गंधनेऽभिनयेऽपि च ५५
सेचनं रक्षणे सेके नौकायाः सेकभाजने सेनानीः स्यात्पुमान्कार्ति
केय सेनापतावपि ५६ सेवनं सीवनोपास्त्योर्हलीरा भ्रेच कर्षके
हस्तिनी गजयोषायां जातिभेदे च योषितः ५७ हसनं नहू योर्हा
सेऽङ्गारधान्यां तु योषिति हायनो न स्त्रियां वर्षे पुंस्यर्चिर्व्रीहिभेदयोः
५८ ह्रादिनी वज्रतडितोर्हिंडनं भ्रमणे रते ॥ नचतुः॥ अवल
ग्नोऽस्त्री यो मध्ये त्रिषु स्याल्लग्नमात्रके ५९ अनूचानो विनीते
स्यात्सांगवेदविचक्षणे अर्वाचीनमवार्गधे विपर्यस्ते च वाच्य
वत् ६० अभिपन्नोऽपराधे भिग्रस्ते चापद्गते त्रिषु अवदानं
खंडने स्यादतिरते च कर्मणि ६१ अभिमानोऽर्थादिदर्पे ज्ञाने
प्रणयहिंसयोः अनीकिनी स्त्रियां सेनामात्र सेनाविशेषयोः ६२
अधिष्ठानं पुरे चक्रे प्रभावेऽध्यासनेऽपि च अन्वासनं स्नेहवस्ता
वुपास्तावनुशोचने ६३ अर्यमा तु पुमान्सूर्ये पितृदेवांतरेऽपि
च अथर्वा ब्राह्मणे पुंसि वेदे तु स्यान्नपुंसकम् ६४ भवेदभि
जनः ख्यातौ जन्मभूम्यां कुलध्वजे कुलेऽपि च पुमानायोधनंपु

शैगभिदेःस्तु ह्यांगुलास्मृता॥ गोला गोदावरीसख्योःकुनटीदुर्गयोःस्त्रियां॥१४॥पत्रांजनेमंडुलेचालिंजरेवालखेलने॥ चला लक्ष्म्यां पुमान्कंपे कंपनेत्वभिधेयवत्॥१५॥ चिल्लः पुमान्क्लिन्ननेत्रेक्लिन्नाक्षेप्यभिधेयवत्॥ आततायिनितत्प्रोक्तश्चिल्ली स्यात्सुद्रवास्तुके॥१६॥ चुल्ली चितायामुद्धानेचोलःकूर्पासकेपुमान्॥ नपुंसकेतुवसनेछलं स्खलितशाठ्ययोः॥१७॥छल्ली वीरुधसंतानेवल्कलेकुसुमांतरे॥ जलं गोकलनेनीरेह्रीबेरेप्यन्यवज्जडे॥१८॥जालं गवाक्षआनायेक्षारकेदंभवृंदयोः॥ जालो नीपद्रुमेजालीपटोलिकौषधौस्त्रियाम्॥१९॥झल्ला स्यादातपस्योर्मौदुहितर्यपिचस्त्रियां॥झिल्ली वीर्यातप रुचोर्वर्त्यामुद्धूर्तनांशुके॥२०॥तलं स्वरूपेनूर्ध्वेस्त्रीक्लीबंज्याघातवारणे॥काननेकार्यबीजेचपुंसितालमहीरुहे॥२१॥चपेटेचत्सरौतंत्रीघातेसव्येनपाणिना॥तल्ली तरुण्यांतल्लुस्तुजलाधारांतरेपुमान्॥२२॥तालःकरतलेंगुष्ठमध्यमाभ्यांचसंमिते॥गीतकालक्रियामानेकरास्फालेद्रुमांतरे॥२३॥ वाद्यभांडेचकांसस्यत्सरौतालीजटौषधौ॥क्लीबंतुहरितालेस्यात्तुलासादृश्यमानयोः॥२४॥ गृहाणांदारुबंधायपीठिकायामपीष्यते॥राशौपलशतेभांडेतुलंस्याद्धूलदारुणि॥२५॥ आकाशेथपिचौनस्त्रीदलं मुत्सेधखंडयोः शस्त्रीछदेप्यवद्र्व्येपत्रेप्यथदुलिःस्त्रियां॥२६॥ कमठ्यांनामुनौदोला नील्यांयानांतरेपिच॥नलःपोटगलेराज्ञिपितृदेवेकपीश्वरे॥२७॥ कमलेपिकुनट्यांचक्रमेणक्लीबयोषितोः॥नाला ननापद्मदंडेनालीशाककडंवके॥२८॥नीलं तुनीलीरक्तेनानिध्यद्रिवानरांतरे॥नीलीरुग्भेदनीलिन्योःपलमुन्मानमांसयोः॥२९॥पल्ल्यस्त्यग्रामकुट्योःपल्लुः स्थूलकुसूलके॥पालिःकर्णलताग्रेश्रेपंक्ताबंकप्रभेदयोः॥३०॥ छात्रादिदेयस्त्रीणालीपूकाश्मश्रुयोषितोः॥पिल्लः पुमान्क्लिन्ननेत्रेक्लिन्नाक्षेपुनरन्यवत्॥३१॥पीलुः

पुमान्प्रसूनेस्यात्वरमाणोमतंगजे॥अस्थिखंडेचता लस्यकांड पादपभेदयो॥३२॥पुलः स्यात्पुलकेपुंसिविपुलेप्यन्यलिंगकः॥फलंजातीफलेसस्येहेतूत्थेव्युष्टिलाभयोः॥३३॥त्रिफलायां चकक्कोलेत्रियंगौतुफलीस्मृता॥फालःपुंसिमहादेवेकालिंदीभेदनेपिच॥३४॥ क्लीबसीरोपकरणेत्रिषुकार्पासवाससि॥वलिर्दैत्यप्रभेदेचकरचामरदंडयोः॥३५॥उपहारेपुमान्स्त्रीतुजरयाश्लथचर्मणि॥गृहदारुप्रभेदेचजठरावयवेपिच॥३६॥बलं गंधरसेरूपेस्थामनिस्थौल्यसैन्ययोः॥पुमान्हलायुधेदैत्यप्रभेदेवायसेपिच॥३७॥ बलयुक्तेऽन्यलिंगःस्याद्वाट्यालकेतुयोषिति॥वल्ली स्यादजमोदायांव्रतत्यामपियोषिति॥३८॥बालो नाकुंतलेश्वस्यकौरणश्चापिबालधौ॥नालिकेरेहरिद्रायांमल्लिकाभिद्यपिस्त्रियां॥३९॥ वाच्यलिंगोऽर्भकेमूर्खेक्लीबेरपुंनपुंसकं॥अलंकारांतरेमध्येबालीबालात्रुटिस्त्रियां॥४०॥ वेला कालेचसीमायामब्धेःकूलविकारयोः॥अक्लिष्टमरणेरागेईश्वरस्यचभोजने॥४१॥ भल्लःस्यात्पुंसिभल्लूकेशस्त्रभेदेतुनद्वयोः॥भल्लातक्यांस्त्रियांभल्लीभालं तेजोललाटयोः॥४२॥मेलःप्लवेमुनौपुंसिभीरावशेचवाच्यवत्॥मलो ऽस्त्रीपापविट्किट्टकृपणेत्वभिधेयवत्॥४३॥मल्लः पात्रेकपोलेचमत्स्यभेदेबलीयसि॥ मालःक्षेत्रेस्त्रियांपृक्कास्त्रजोर्जात्यंतरेपुमान्॥४४॥मालुःपत्रलतानार्योःस्त्रियांमूलंशिफादयोः॥मूलविज्ञेतिकेवानामेल्लास्यान्मलकेमसौ॥४५॥मौलिःकिरीटेधम्मिल्लेचूडायामनपुंसक॥नाशोकद्रौस्त्रियांभूमौलीला केलिविलासयोः॥४६॥श्रृंगारभावजेश्शयांलोलः स्याद्वाच्यलिंगकः॥सतृष्णेचंचलेलोलारजिह्वाकमलयोःस्त्रियां॥४७॥व्यालोदुष्टगजेसर्पेश्वापदेनाऽन्यवत्खले॥बिलं छिद्रेगुहायांचपुमानुच्चैःश्रवोहये॥४८॥शलस्तुशल्लेपुंसिभृंगिरिटेत्रभिदोर्विधौ॥शालुः कषायद्रव्येस्या

ञ्चारकारव्यौषधौ पुमान्॥४९॥ शालिस्तु कलमादौ च गंधमार्जारके पुमान्॥ शाला द्रुस्कंधशाखायां गृहगेहैकदेशयोः॥५०॥ नाऽऽख्ये पेशीलं मुख्ये स्याद्द्रूपध्यां शिली मता॥ स्तंभशीर्षे शिला शिल्यै शिला तु प्रस्तरे मता॥५१॥ तथा मनःशिलायां च द्वाराधःस्थितदारुणि॥ शीलं स्वभावे सद्वृत्ते शुक्लो योगांतरे सिते॥५२॥ नपुंसकं तु रजते शूलोऽस्त्री रोग आयुधे॥ मृत्युकेतनयोगेषु शूला स्यात्पण्ययोषिति॥५३॥ शूलो भूभृति शैलं तु शैलेयेताक्ष्यशैलके॥ सालः पादपमात्रे स्यात्प्राकारे सर्जपादपे॥५४॥ स्थालं भाजनभेदेऽपि स्थाली स्यात्पाटलेस्त्रयोः॥ स्थूलं कूटे स्थनिष्प्रज्ञे पीवरे स्यान्यलिंगकः॥५५॥ हालो हले पुमान्हाला मदिरायां च योषिति॥ हेला स्त्रियामवज्ञायां विलासे वरयोषिताम्॥५६॥ लत्रिः॥ अनलो वसुभेदेऽग्ना वनिलो वसुवातयोः॥ अर्गला त्रिषु कल्लोले दंडेऽन्तरकपाटयोः॥५७॥ अरालः कुटिले सर्जरसे समददंतिनि॥ अंगुली करशाखायां कर्णिकायां गजस्य च॥५८॥ अचला वसुधायां स्यादचलः शैलकीलयोः॥ अमलं त्वभ्रके क्लीबं लक्ष्म्यां स्त्री निर्मले त्रिषु॥५९॥ अंजलीस्तु पुमान्हस्तसंपुटे कुडवेऽपि च॥ अपेलस्त्वपलापे स्यादवेला पूगचर्चिते॥६०॥ आभीलं नद्रूपोः कृच्छ्रे वाच्यलिंगं भयानके॥ इल्वला तारकाभेदे नाभेदे दैत्यमत्स्ययोः॥६१॥ उत्पली तु षचर्पट्यां क्लीबं कुष्ठमसूनयोः॥ उपलः प्रस्तरे रत्ने शर्करायां तु योषिति॥६२॥ उज्ज्वलो दीप्तशृंगारविशदेषु विकाशिनि॥ उत्फुल्लं करणे स्त्रीणामुत्तालेऽपि विकस्वरे॥६३॥ उत्तालउत्कटेश्रेष्ठे विफले कपिसंगमे॥ कमलं सलिले ताम्रे जलजे क्लोम्नि भेषजे॥६४॥ मृगभेदे तु कमलः कमला श्रीवरस्त्रियोः॥ कपिला रेणुकायां च शिंशपागोविशेषयोः॥६५॥ पुंडरीककरिण्यां स्त्री वर्णभेदे त्रिलिंगकं॥ नानले वासुदेवे च मुनिभेदे च कुक्कुरे॥६६॥ कंबलो नागराजे स्यात्सास्नाप्रावारयोरपि॥ कृमावप्युत्तरासंगे सलिले तु नपुंसकं ६७

करालोदंतुरेतुंगेभीषणेचाभिधेयवत्॥ससर्जरसतैलेनाक्लीबंष्ठ
ष्ठाकुठेरके॥६८॥कदलंत्रिषुकपालेप्युपरागेनवांकुरे॥कलध्व
नौकंदलीतुमृगगुल्मप्रभेदयोः॥६९॥कदलाकदलीपृश्न्यांक
दलीकदलौपुनः॥रंभावृक्षेऽथकदलीपताकामृगभेदयोः॥७०॥
कदलाडिंबिकायांचशाल्मलीभूरुहेपिच॥कपालोऽस्त्रीशिरोऽ
स्थ्निस्याद्घटादेःशकलेव्रजे॥७१॥कंठीलातुद्वयोर्द्रोणीप्रभेदेना
क्रमेलके॥कल्लोलःपुंसिहर्षेस्यादुल्लोलवैरिणोरपि॥७२॥काम
लारोगभेदेस्यानानामरुवसंतयोः॥कामुकेवाच्यलिंगोथकालो
लंनरकांतरे॥७३॥नाकुलालेद्रोणकाकेविषभेदेतुनस्त्रियाम्॥
काहलावाद्यभांडस्यभेदेचाप्सरसांभिदि॥७४॥काहलीतुत
रुण्यांस्यात्काहलश्चरणायुधे॥शब्दमात्रेपिपुल्लिंगस्त्रिषुशु
ष्केभृशेखले॥७५॥किट्टालःपुंसिताम्रस्यकलशेलोहगूथके
॥कीलालंरुधिरेतोयेकुशलःशिक्षितेत्रिषु॥७६॥क्षेमेचसुकृ
तेचापिपर्याप्तेचनपुंसकं॥कुवलंचोत्पलेमुक्ताफलेपिबदरी
फले॥७७॥कुड्मलोमुकुलेपुंसिनद्यौनरकांतरे॥कुटिला
तगरपाद्यास्त्रीभुग्नेवाच्यलिंगक॥७८॥कुंतलश्चषकेबा
लेजवेपुंभूम्निनीवृति॥कुलालःकुक्कुभेकुंभकारेस्त्रीलंजनां
तरे॥७९॥कुंभिलःशालमीनेचचोरेश्लोकार्थचोरयोः॥कुद्दा
लःस्यात्सुमान्भूमिदारणेयुगपत्रके॥८०॥कुवेलाविद्रुपर्ण्यां
स्त्रीवाच्यवत्तुकुवाससि॥कुलूलंशंकुसंकीर्णश्वभ्रेनातुतुषान
ले॥८१॥कुंडलंकर्णभूषायांपाशेपिवलयेपिच॥कांचनद्रुगुडू
च्योःस्त्रीकेवलःकुहनेपुमान्॥८२॥नपुंसकंतुनिर्णीतेवाच्य
वच्चैकृत्स्नयोः॥केवलीज्ञानभेदेथकोमलंमृदुलेजले॥८३॥
कोहलोवाद्यभेदेस्यान्नाट्यशास्त्रप्रवक्तरि॥ग्रंथिलस्तुक
रीरेविकंकततरौपुमान्॥८४॥सग्रंथौत्रिषुगंधोलीभद्रेशा
ट्योश्चपेविति॥गरलंतृणपूलेचविषमानेनपुंसकं॥८५॥गो

पालोनृपगोपयोगोकुलेमुसलेहले॥गोलिलस्तुपुमान्लोहचूर्णे स्याद्गौरसर्षपे॥चपलःपारदेमीनेचोरकेप्रस्तरांतरे॥चपला कमलाविद्युत्पुंश्चलीपिप्पलीषुच॥८७॥नपुंसकंतुशीघ्रेस्याद्वा च्यवत्तरलेचले॥चत्वालोहोमकुंडेस्यात्पुंसिदर्भेपिदृश्यते॥८८॥ चंद्रिलःपुंसिवास्तूकेभर्गेचनापिते॥चंचलातुतडिल्लक्ष्म्यो श्चञ्चलःकामुकेनिले॥८९॥चूडालातूच्चटायांस्त्रीचूडावति चवाच्यवत्॥छगलंनीलवस्त्रेनाछागेस्त्रीवृद्धदारके॥९०॥जं बालःशैवलेपंकेजगलोमदनद्रुमे॥भेदकेपिष्टमद्येचपुंसिधू र्तेःभिधेयवत्॥९१॥जटिलापिप्पलीमांस्योर्जटायुक्तेतुवाच्य वत्॥जंगलंनिर्जनस्थानेत्रिलिंग्यांपिशितेस्त्रियां॥९२॥जंभ लःपुंसिजंबीरेबुद्धदेवांतरेपिच॥जंबूलस्तुपुमान्जंबूविट पेक्रकचच्छदे॥९३॥जांगलीविषविद्यायांजांगलंजालिनीफ ले॥जांगलीशूकशिंब्यांस्त्रीजांगलोनाकपिंजले॥९४॥तर लंचंचलेषिड्गेभास्करेपित्रिलिंगकं॥हारमध्यमणौपुंसियवागू सुरयोःस्त्रियाम्॥९५॥तंडुलःस्याद्विडंगेचधान्यादिनिकरेपु मान्॥तमालस्तिलकेखड्गेतापिच्छेवरुणद्रुमे॥९६॥तांबूली नागवल्यांस्त्रीक्रमुकेतुनपुंसकं॥तातलोरुजिपाकेचलोहकू टेमनोजवे॥९७॥तुमुलःकलिवृक्षेनाक्लीबंतुरणसंकुले॥तैति लोगंडकेपुंसिक्लीबंतुकरणांतरे॥९८॥दुकूलंश्लक्ष्णवस्त्रे स्यात्क्षौमेचधवलागवि॥वृषश्रेष्ठेपुमान्वाच्यलिंगःशुक्लेचसुंद रे॥९९॥नकुलीकुक्कुटीमांस्योःपशुपांडवयोःपुमान्॥नाकुली कुक्कुटाकंदेरास्नायांचविकेस्त्रियां॥१००॥नाभीलंवंक्षणेना र्याःकृच्छ्रगर्भांडयोरपि॥निचूलस्तुनिचोलेस्याद्विज्जलाख्यम हीरुहे॥१॥निर्मलंस्यात्तुनिर्माल्येचाभ्रकेचनपुंसकं॥मलही नेऽन्यलिंगंचनिस्तलंवर्तुलेचले॥२॥निष्कलंतुकलाशून्येन ष्टवीर्येचवाच्यवत्॥नैपालीतुनवमालीकुनटीसुवहासुच॥३॥

पललं तिलचूर्णे च पंके मांसे नपुंसकं ॥ ना राक्षसे ऽथ पटलं पिटके च परिच्छदे ॥ ४ ॥ छदिर्दृग्रोगतिलके क्लीबं च ब्रजे पुनर्नवा ॥ प्रतलं पातालभेदे ततांगुलिकरे पुमान् ॥ ५ ॥ पटोलं वस्त्रभेदे नौषधौ ज्योत्स्न्यां तु योषिति ॥ प्रवालो ऽस्त्री किसलये वीणादंडे च विद्रुमे ॥ ६ ॥ पचाली पुत्रिकागीत्योः स्त्रियां पुंभूम्नि नीवृति ॥ पांशुलः पुंश्चले शंभोः खट्वांगे स्त्र्यसतीभुवोः ॥ ७ ॥ पाकलं कुष्ठभेषज्ये पुंसि स्यात्कुंजरज्वरे ॥ पाचालं पाचने ना ऽग्नौ वा धनद्रव्यजातयोः ॥ ८ ॥ पाटला पाटली स्त्री स्यादस्य पुष्पे पुनर्नना ॥ आशुधान्ये पुमांस्तु श्वेतरक्तवर्णे ऽपि वाच्यवत् ॥ ९ ॥ पातालं नागलोके स्याद्विवरे वडवानले ॥ पालिली वागुरायां स्यान्नारी पात्रप्रभेदयोः ॥ १० ॥ पिप्पली सलिले वस्त्रच्छेदभेदे च नातरौ ॥ निरंशुके पक्षिभेदे कणायां पिप्पली स्मृता ॥ ११ ॥ पिचुलो झबुके ऽपि स्याद्दिज्जले जलवायसे ॥ पिंगलो नागभिद्रुद्रचंडांशुपारिपार्श्विके ॥ १२ ॥ निधिभेदे कपौ वह्नौ पुंसि स्यात्कपिले ऽन्यवत् ॥ स्त्रियां वेश्याविशेषे च करिण्यां कुमुदस्य च ॥ १३ ॥ पित्तला तोयपिप्पल्यां स्त्र्यन्यवत्पित्तसंयुते ॥ क्लीबं तु तैजसद्रव्ये पिच्छलो विज्जिले ऽन्यवत् ॥ स्त्री पोतिकाशिंशपयोः शाल्मलीसिंधुभेदयोः ॥ पुष्कलः सुंदराकारे त्रिषु पुंस्त्वमभेदयोः ॥ १५ ॥ पेशलो रुचिरे दक्षे फेनिलो ऽरिष्टपादपे ॥ ना सफेने त्रिषु क्लीबं कोलीमदनयोः फले ॥ १६ ॥ बहुला नीलिकायां स्यादेलायां गवि योषिति ॥ कृत्तिकासु स्त्रियां भूम्नि विहायसि नपुंसकं ॥ १७ ॥ पुंस्यग्नौ कृष्णपक्षे च वाच्यवत्प्राज्यकृष्णयोः ॥ बर्बरस्य बालला च पिंगेपोली हंसकांतयोः ॥ १८ ॥ बार्दलं दुर्दिने मेघानंदायां बार्दलः स्मृतः ॥ मंगला सितदूर्वायामुमायां पुंसि भूमिजे ॥ १९ ॥ नपुंसकं तु कल्याणे सर्वार्थरक्षणे ऽपि च ॥ मंडलं परिधौ कोठे देशे द्वादशराजसु ॥ २० ॥ क्लीबे ऽथ निवहे बिंबे त्रिषु पुंसि तु कुक्कुरे ॥ मंजुलं त्रिषु रम्ये ना जलरंके नपुंसकं ॥ २१ ॥

जलांचले निकुंजे च महिलाफलिनीस्त्रियोः ॥ मातुलो व्रीहिभिन्मा
तृभ्रात्रोश्च मदनद्रुमे ॥ २२ ॥ धुस्तूरे माचलो वंदिचौरे च ग्राहरोगयोः
॥ मुसलं स्यादयोग्रे तु पुंनपुंसकयोः स्त्रियाम् ॥ २३ ॥ तालमूल्यामा
खुपर्णीग्रहगोधिकयोरपि ॥ मृणालं नलदे क्लीबं स्त्रीनपुंसकयोर्बि
से ॥ २४ ॥ मेखला खड्गबंधे स्यात्कांचीशैलनितंबयोः ॥ यमलं युग
ले क्लीबे यमली चोटिकाद्वये ॥ २५ ॥ रसाला रसना दूर्वा विदारीमार्जि
तासु च ॥ रसालं सिल्हके बोले रसालस्त्वेक्षुचूतयोः ॥ २६ ॥ रामि
लो रमणे कामे लांगूलं पुच्छशेफसोः ॥ लांगली तोयपिप्पल्यां क्लीबं तु
कुसुमांतरे ॥ २७ ॥ गोदारणे तृणराजगृहदारुविशेषयोः ॥ लोहलः
शृंखलाचार्ये ऽव्यक्तवाजिनि च त्रिषु ॥ २८ ॥ वंजुलः पुंसि तिनिशे वेत
साशोकयोरपि ॥ वेंठालो युद्धभेदे च नौकायां च खनित्रके ॥ २९ ॥ वा
तूलः पुंसि वासायां वाच्यवन्मारुतासहे ॥ वामिलो दांभिके वामे त्रि
षु स्याद्विमला स्त्रियां ॥ ३० ॥ शातलायां भुवो भेदे निर्मले त्वभिधेय
वत् ॥ विपुलः पृथुले ऽगाधे मेरुपश्चिमभूधरे ॥ ३१ ॥ विदुलस्तु पुमा
नंबुवेतसे वेतसे ऽपि च ॥ विडालो नेत्रपिंडे स्याद्वृषदंशकके पुमान्
॥ ३२ ॥ विशाला त्विंद्रवारुण्यामुज्जयिन्यां तु योषिति ॥ मृगपक्षिभि
दोः पुंसि पृथुले त्वभिधेयवत् ॥ ३३ ॥ वृषलो गृंजने शूद्रे चंद्रगुप्ते च राज
नि शाकलं त्वचि खंडे स्याद्रागवस्तुनि वल्कले ॥ ३४ ॥ शंबलः स्त्री
संबलवत्कूलपाथेयमत्सरे ॥ शयालुः स्यादजगरे निद्राशीले च कुक्कुरे
॥ ३५ ॥ श्रद्धालुर्दोहदिन्यां स्त्री श्रद्धायुक्ते तु वाच्यवत् ॥ श्यामलः पि
प्पले कृष्णे शार्दूलो राक्षसांतरे ॥ ३६ ॥ व्याघ्रे च पशुभेदे च सत्तमे तूत्त
रस्थितः ॥ शाल्मलिस्तरुभेदे स्याद्द्वीपभेदे ऽपि च द्वयोः ॥ ३७ ॥ श्रीफ
लः पुंसि मालूरे धात्रीनीलिकयोः स्त्रियाम् ॥ शीवलं स्याच्च शैवाले
शैलेये च नपुंसकं ॥ ३८ ॥ शीतलं पुष्पकाशीशे शैलजे मलयोद्भवे ॥
पुमानासनपर्ण्यां स्याच्छिशिरे वाच्यलिंगकं ॥ ३९ ॥ शृगालो वंच
के दैत्यभेदे ना डमरे स्त्रियां ॥ शृंखला पुंस्कटीवस्त्रबंधे च निगडे त्रि

पु॥४०॥शैवलं पद्मकाष्ठेस्याच्छैवालेपि पुमानयं॥शैष्कलः शु
ष्कमांसस्य पणके पिशिताशिनि॥४१॥षंडाली तैलमाने च सरसी
कामुकस्त्रियोः॥सरलः पद्मकाष्ठे ना स्थोदारावक्रयोस्त्रिषु॥४२
संकुलं त्रिषु विस्पष्टवाचि व्यासे थ सप्तला॥नवमालीच मेकपा
गुंजासु पाटली स्त्रियां॥४३॥संधिला तु सुरुंगायां नदीमंदिरयोः
स्त्रियां॥सिध्मला मत्स्यविकृतौ वाच्यवत्तु किलासिनि॥४४॥सु
वेलः प्रणते शांते त्रिषु ना पर्वतांतरे॥सुतलो ट्टालिकाबंधनागलो
कप्रभेदयोः॥४५॥हिंगुलो वर्णकद्रव्ये ना भंदाक्यां तु हिंगुली॥हे
मलः स्वर्णकारे स्यात्‌ कलासे शिलांतरे॥४६॥ लचतुः॥अक्ष
माला स्त्रस्त्रे स्यादरुंधत्यामपि स्त्रियां॥अंकपाली परीरंभे
धात्रीवेदिकयोः स्त्रियां॥४७॥अथातिबलः प्रबले त्रिषु स्त्रीत्वौ
षधीभिदि॥उदूखलं गुग्गुलौ स्यादुलूखलेपि न द्वयोः॥४८॥ए
काष्ठीला वनतिक्तिकौषधौ पुंसि बकपुष्पे॥कलकल उक्तः को
लाहले तथा सर्जनिर्यासे॥४९॥अथ कर्मफलं कर्मरंग कर्मविपा
कयोः॥करालः पुमान्‌ दैर्भांडे पुंस्तरावपि॥५०॥कमंडलुः स्यात्करके न
स्त्री ना प्लक्षपादपे॥कुतूहलं कौतुके स्यात्प्रशस्तेपि च दृश्यते॥५१॥खतमा
लस्तु पुल्लिंगो धूमेपि च बलाहके॥गंडशैलो ललाटे स्याच्च्युतस्थूलोपले गि
रेः॥५२॥गंधफल्यपि गुग्गायां चंपकस्य च कोरके॥चक्रवालोद्रिभेदे स्या
च्चक्रवालं तु मंडले॥५३॥जलांचलं स्वतो वारिनिर्गमे शैवले
पि च॥दलामलं मरुबके दमनेपि नपुंसकं॥५४॥ध्वनिनाली
तु वीणायां वेणुकाहलयोरपि॥स्यात्परिमलोः तिमर्दत्तिमनो
हरगंधयोश्चापि॥५५॥सुरतोपमर्दविकसच्छरीररागादिसौरभे
पुंसि॥अथ पोटगलः पुंसि नले च काशमत्स्ययोः॥५६॥भवेद्दु
हुफलो नीपे ना मलक्यां तु योषिति॥भस्मतूलं ग्रामकूटे पांसु
वर्षे हिमेपि च॥५७॥भद्रकाली तु गंधोल्यां कात्यायन्यामपि स्त्रि
यां॥महाकालो महादेवे किंपाके प्रथमांतरे॥५८॥भवेन्मदक

लोमत्तेभेमदाव्यक्तवाचिनोः ॥ महाबलं सीसकेति वलायां स्त्री
बलोत्कटे ॥ ५९ ॥ त्रिलिंगं मणिमाला तु हारे दंतक्षतांतरे ॥ महा
नीलो भृंगराजे मणिनागविशेषयोः ॥ ६० ॥ मुक्ताफलं तु कर्पूरे
मौक्तिके लवलीफले ॥ स्यान्मृदुफला कदल्यां महाकालफले पु
मान् ॥ ६१ ॥ भवेद्यवफलो वेणौ मांसीकुटजयोरपि ॥ रजस्वला
पुष्पवत्यां स्त्रियां स्यात् सौरभे पुमान् ॥ ६२ ॥ वातकेलिः कलाला
पे षड्गदंतक्षते पुमान् ॥ अथ वायुफलं शक्रकार्मुके करके पि च ॥
६३ ॥ भवेद्धि च किलो मल्लीप्रभेदे मदने पुमान् ॥ बृहन्नला गुडाके
शे महापोटगले पुमान् ॥ ६४ ॥ सदाफलः स्कंधफले नारिकेले च्यु
दुंबरे ॥ सिनीवाली तु दृष्टेंदुकलामादुर्गयोः स्त्रियां ॥ ६५ ॥ अथ
सौवर्चलं सर्जक्षारे च लवणांतरे ॥ हस्तिमल्लो ऽभ्रमातंगे शंख
नागे विनायके ॥ ६६ ॥ हरितालं धातुभेदे स्त्री दूर्वाकाशरेखयोः
॥ हलाहलो ब्रह्मसर्पे अंजनायां विषे स्त्रियां ॥ ६७ ॥ लपंच ॥ ॥
आसुतीबल आख्यातः कन्यापालकयज्वनोः ॥ उदंडपालः
पुंसि स्यात्सर्वमत्स्यप्रभेदयोः ॥ ६८ ॥ एककुंडल आख्यातो बल
भद्रे धनाधिपे ॥ कपोटपाल उद्दिष्टः केलितावसमुद्रयोः ॥ ६९ ॥
स्यात्पांडुकंबलः श्वेतप्रावारग्रावभेदयोः ॥ भवेत्सुरतताली
तु दूतिकायां शिरःस्रजि ॥ ७० ॥ इति लांतवर्गः ॥ २०२३ ॥ वैकं
॥ वः सांत्वने च वाते च वरुणे च निगद्यते ॥ वं प्रचेतसि जानीया
दिवार्थे च तदव्ययं ॥ १ ॥ स्वः स्यात्पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीये
धने स्त्रियां ॥ वह्निः ॥ अविर्नाथे रवौ मेषे शैले मूषिककंबले ॥
२ ॥ अश्वः पुंजातिभेदे चतुरंगे च पुमानयं ॥ ऊर्ध्वं स्यादुच्छ्रिते
तुंगे चोपरिष्टादपि स्मृतं ॥ ३ ॥ क्षवः क्षुते राजिकायां कवि र्वा
ल्मीकिशुक्रयोः ॥ सूरौ काव्यकरे पुंसि खलीनेस्यात्तु योषिति ॥ ४ ॥
कण्वं पापे मुनौ पुंसि किण्वं बीजे च शंधुनः ॥ पापे क्लीबं नपुंसके
शंडे ऽन्यवदविक्रमे ॥ ५ ॥ स्यात्तु ग्रीवा कंधरायां तच्छिरायां च

योषिति॥ चार्वी तु शोभना बुध्योज्योत्स्नाधनदभार्ययोः॥६॥
छविः शोभारुचोर्योषिज्जवो वेगवति त्रिषु॥ पुल्लिंगस्तु भवेद्वेगे चौ
ड्रपुष्पे जवा स्मृता॥७॥ जीवः प्राणितिवृत्तौ च वृक्षभेदे बृहस्पतौ
॥ जीवा जीवंतिकामौर्वीवचाशिंजितभूमिषु॥८॥ नस्त्री तु जी
विते तत्त्वं स्वरूपे परमात्मनि॥ स्याद्विलंबितनृत्ये च द्रुवः माद्रव
नर्मणोः॥९॥ रसेपि द्रवदावौ तु वनवन्हौ च नेप्युभौ॥ द्वं द्वं रहस्य
कलहे तथा मिथुनयुग्मयोः॥१०॥ दार्वी दारुहरिद्रायां तथा गो
जिह्विकौषधौ॥ द्यौः स्त्री स्वर्गे च गगने दिवं क्लीबं तयोः स्मृतं॥
११॥ देवो मेघे सुरे राज्ञि स्यान्नपुंसकमिंद्रिये॥ देवी कृताभिषेका
यां तेजनीपृक्कयोरपि॥१२॥ धवः पुमान्धवे धूर्ते पत्यौ वृक्षांतरे
पि च॥ ध्रुवः शंकौ हरे विष्णौ वटे चोत्तानपादजे॥१३॥ वसुयोग
भिदोः पुंसि क्लीवं निश्चिततर्कयोः॥ स्त्री मूर्व्याढ्यो शालपर्ण्यां गी
तिस्त्रुग्भेदयोस्त्रिषु॥१४॥ संतते शाश्वते चाथ नवं नव्ये पुमान्न
स्तुतौ॥ नीवी परिपणे स्त्रीणां कटीवसनबंधने॥१५॥ पक्वं प
रिणतेपि स्याद्विनाशाभिमुखे त्रिषु॥ प्लवः स्यात्प्लवने भेले भेके
ऽवौ श्वपचेपपो॥१६॥ जलकाके च कुलके प्रवणे पर्कटीद्रुमे॥
कारंडवाख्यविहगे शब्दे प्रतिगतो पुमान्॥१७॥ कैवर्त्तिमुस्तके
गंधतृणेपि स्यान्नपुंसकं॥ पार्श्वं कक्षांतरे चक्रोपांते पर्शुगणे
पि च॥१८॥ माध्वं तु प्रणते चातिदूरवर्त्मनि बंधने॥ पृथ्वी भूमौ
महत्यां च त्वक्पत्र्यां कृष्णजीरके॥१९॥ भवः क्षेमेशसंसारे स
त्तायां प्राप्तिजन्मनोः॥ भावः सत्तास्वभावाभिप्रायचेष्टात्मज
न्मसु॥२०॥ क्रियालीलापदार्थेषु विभूतिबुधजंतुषु॥ रत्यादौ
चाथरेषास्यान्नील्यां स्त्योनदीभिदि॥२१॥ लवो लेशे विनाशे च
छेदने रामनंदने॥ लवा करंजभेदे स्यात्सलेवाद्येखगांतरे २२
लध्वी लाघवयुक्तायां प्रभेदे स्यंदनस्य च॥ विश्वा त्वतिविषायां
स्त्री जगति स्यान्नपुंसकं॥२३॥ ननामुं क्वांपुंसि देवप्रभेदेष्व

खिलेत्रिषु॥ **बिल्वं** फलेश्रीफलेनाशवः स्यात्कुणपेपुमान्॥२४॥ नपुंसकेतुपानीयेशिवभूर्जेनृपेपुमान्॥ **शिवो** मोक्षेमहादेवेकीलकग्रहयोगयोः॥२५॥ वालुकेगुग्गुलौवेदेपुंडरीकद्रुमेपुमान्॥ सुखक्षेमजलेक्लीबंशिवा झाटामलोषधौ॥२६॥ अभयामलकीगौरीफेरुसक्तफलासुच॥ **शिव** स्तुभूर्जपत्रेस्यात्तथोदारमहीपतौ॥२७॥ **स्रुत्वं** सान्त्रेयज्ञकर्मण्याचारेजलसन्निधौ॥ **सत्वं** गुणेपिशाचादौबलेद्रव्यस्वभावयोः॥२८॥ आत्मत्वेव्यवसायासुत्विलेष्वस्त्रीतुजंतुषु॥ **सवो** यज्ञेचसंधानेसांत्वंदाक्षिण्यसामनोः॥२९॥ **स्रुवा** हुयोर्हेमपात्रेशल्लकीमूर्वयोःस्त्रियाम्॥ **हव** आज्ञाध्वराव्हानेव्हस्वोन्यक्रूखर्वयोस्त्रिषु॥३०॥ **वत्रि**॥ **अश्वीवं** वशिरेशिरोनामत्तेपुनरन्यवत्॥ **अभावो** मरणेसत्वेआहवोयुद्धयज्ञयोः॥३१॥ **आर्तवं** स्त्रीरजेपुष्पेक्लीबंस्यादृतुजेत्रिषु॥ **आश्रवो** गीःकृतौक्लेशेनान्यवद्वचनस्थिते॥३२॥ **उद्धवो** यादवभिदिमहेचक्रतुपावके॥ **उत्सवो** महउत्सेकेइच्छाप्रसवकोपयोः॥३३॥ **का** रवीमधुरादीप्यत्वक्पत्रीकृष्णाजीरके॥ **कितव** स्तुपुमान्मत्ते वंचकेकनकाव्हये॥३४॥ **केशवो** ऽजेचपुन्नागेपुंसिकेशवतित्रिषु॥ **कैतवं** तुछलेघूतेकैरवःकितवेरिपौ॥३५॥ नपुंसकंचकुमुदेचंद्रिकायांतुकैरवी॥ **गांडीवो** गांडिवश्वाऽस्त्रीकार्मुकेऽर्जुनकार्मुके॥३६॥ **गालव** स्तुमुनौलोध्रेतांडवोऽस्त्रीतृणांतरे॥ भवेदुद्धतनृत्येचत्रिदिवासरिदंतरे॥३७॥ पुंसिस्वर्गेद्यौर्दिवि नौधिषणेऽन्तरदस्त्रियां॥ **निष्पावः** शूर्पपवनेराजमेषेकडंगके॥३८॥ पवनेशिंबिकायांनानिर्विकल्पेऽन्यलिंगकः॥ **निन्हवः** पुंसिनिन्हुतावविश्वासापलापयोः॥३९॥ **पल्लवो** ऽस्त्रीकिसलयेविटपेविस्तरेवने॥ शृंगारेऽलक्तरागेस्त्री **प्रभावः** शांतितेजसोः॥४०॥ **पंचत्वं** पंचानांभावेप्राणानामत्ययेपिच॥ **प्रभवो** जन्ममूलेस्याज्जन्महेतौपराक्रमे॥४१॥ ज्ञानस्यचादिमस्थाने **प्रसवो** गर्भमोचने॥ उत्पा

देस्यादपत्येपिफलेपिकुसुमेपिच॥४२॥प्रसेवः पुंसिवीणांगेस्यू
तेचपार्थिवोनृपे॥पार्थिवीतुसितायांस्त्रीपृथिव्याविकृतौत्रिषु॥
॥४३॥पुंगवःस्याद्बलीवर्देप्रभेदेप्यौषधस्यच॥उत्तरस्थःपुनःश्रे
ष्ठेफेरवोजंबुकेरक्षपे॥४४॥बल्लवःसूपकारेस्यात्भीमसेनेच
गोदुहि॥बांधवोबंधुसुहृदोभार्गवोगजधन्विनोः॥४५॥शुक्रेप
रशुरामेच भार्गवीपार्वतीश्रियोः॥दूर्वायांभैरवःपुंसिशंकरे
भीषणेत्रिषु॥४६॥माधवोजेमधौराधेयादवेनास्त्रियांमिसौ॥
मधुशर्करावासंतिकुट्टनीमदिरासुच॥४७॥गोमहिषादिसंपत्तौ
यादवःपुंसिकेशवे॥राजीवंनलिनेन्नातुभेदेहरिणमीनयोः॥४८
राघवोब्धौमहामीनभेदेचरघुवंशजे॥रौरवोनरकेघोरेवडवा
द्विजयोषिति॥४९॥अश्वायांकुंभदास्यांचनारीजात्यंतरेपिच॥
ताडवंकरणेस्त्रीणांघोटकौघेनपुंसकं॥५०॥पातालेनस्त्रियां
पुंसिब्राह्मणेवडवानले॥विभवोरैमोक्षेश्वर्येविद्रवोविद्रुतो
धियि॥५१॥विभावःस्यात्परिचयेरसस्योद्दीपनादिषु॥शात्र
वंभावसहसो शत्रूणांशात्रवोद्विषि॥५२॥षाडवोगानरसयोः
सचिवोमंत्रिचेटयोः॥सहायेसंभवोहेतावुत्पत्तौमेलकेपिच॥
॥५३॥आधारानतिरिक्तत्वेप्याधेयस्यनिगद्यते॥सुग्रीवोवासुदे
वस्यहयेशाखामृगेश्वरे॥५४॥सुषवीकारवेल्लेस्यात्कृष्णाजी
रकजीरयोः॥सैंधवोस्त्रीमणिमंथेनाश्वेसिंधुभवेत्रिषु॥५५
वचतुः॥अनुभावःप्रभावेस्यान्निश्चयेभावबोधके॥भवेद
भिषवःस्नानेमद्यसंधानयज्ञयोः॥५६॥अपन्हवस्तुपुल्लिंगः
स्मृतस्नेहापलापयोः॥आदीनवःपुमान्दोषेपरिक्लिष्टदुरंतयोः
॥५७॥उपप्लवःसैंहिकेयेविप्लवोत्पातयोरपि॥कुशीलवस्तुवा
ल्मीकौनटयाचकयोरपि॥५८॥जलबिल्वःकर्कटेस्यात्पंचागे
जलचत्वरे॥जीवंजीवश्चकोरेस्याद्द्रुमभेदेपिपुंस्ययं॥५९॥धा
मार्गवस्तुपुंसिस्यादपामार्गेचघोषके॥पारिप्लवश्चा कुले

स्यात्त्वं चलेच पराभवः॥६०॥ तिरस्कारे विनाशे च पुंसि पारशवः पुमान्॥ परस्त्रीतनये शस्त्रे द्विजाच्छूद्रासुतेपि च॥६१॥ पुटग्रीवस्तु पुल्लिंगो गर्गरीताम्रकुंभयोः॥ बलदेवो बले वा तेत्रायमाणौ षधौ स्त्रियां॥६२॥ रंतिदेवस्तु नृपतेर्भेदे च गरुडध्वजे॥ रोहिताश्वश्चित्रभानौ हरिश्चंद्रनृपात्मजे॥६३॥ अथ शीतशिवं क्लीबं शैलेयमणिमंथयोः॥ पुंसि सक्तुफलावृक्षे तथा मधुरिकौषधौ॥६४॥ सहदेवा वलादंडोत्पलयोः शारिवौषधौ॥ सहदेवी तु सर्पाक्ष्यां पुंसि स्यात्पांडवे पुनः॥६५॥ वपंच॥ आशितंभवमन्नाद्ये तृप्ता वप्याशितंभवा॥ इति वांतवर्गः॥ शद्विः॥ अंशुः प्रभाकिरणयोर्नाशा तृष्णा दिशोः स्त्रियाम्॥ आशु धान्यांतरे शीघ्रे पीशा लांगलदंडके॥१॥ ईशः प्रभौ महादेवे काशी वाराणसीपुरे॥ न स्त्रियां तृणभेदे स्यात्कीशो दिगंबरे कपौ॥२॥ कुशी फाले कुशा रज्ज्वां त्रिषु पापिष्ठमत्तयोः॥ योक्त्र राम सुत द्वीपे नाद्दर्भे स्त्री कुशं जले॥३॥ केशः स्यात्पुंसि वरुणे ह्रीबेरे कुंतलेपि च॥ क्लेशो दुःखेपि कोपेपि व्यवसायेपि दृश्यते॥४॥ कोशो स्त्री कुड्मले पात्रे दिव्ये खड्गपिधानके॥ जातिकोशेऽर्थसंघाते पेश्यां शब्दादिसंग्रहे॥५॥ दर्शस्तु स्याद्मावास्यायागभेदावलोकने॥ दंशः कीटविशेषे च वर्मदंशनयोः पुमान्॥६॥ दशावस्थादीपवर्त्योर्वस्त्रांते भूम्नि योषिति॥ दृक् स्त्रियां दर्शने नेत्रे बुद्धौ च त्रिषु वीक्षके॥७॥ नाशः पलायनेपि स्यान्निधनानुपलंभयोः॥ निशा दारुहरिद्रायां स्यात्त्रियामाहरिद्रयोः॥८॥ पश्युर्मृगादिदेवाजे नाऽव्ययं पश्युदर्शने॥ पाशः केशादिपूर्वः स्यात्तत्संघे कर्णपूर्वकः॥९॥ सुकर्णे च स्त्रसामर्थ्यान्मृगपक्ष्यादिबंधने॥ पांशुर्धूलौ च सस्यार्थचिरसंचितगोमये॥१०॥ पेशी सुपक्वकलिके मांस्यां खड्गपिधानके॥ मांसपिंड्यामंडभेदे राशेर्मेषादिपुंजयोः॥११॥ पुंसि वंशः कुले वेणौ पृष्ठावयववर्गयोः॥ वशा वंध्यासुतायोषा९

स्त्रीगवीकरणीषु च ॥१२॥ त्रिष्वायते क्लीबमायतत्वे चेच्छाप्रभुत्वयोः ॥ विट् पुंसि मनुजे वैश्ये वेशो वेश्यागृहे गृहे ॥१३॥ नेपथ्ये च शशी बाले लोध्रे नृपप्रभेदयोः ॥ स्पर्शो रुजायां दाने च स्पर्शने स्पर्शकेपि च ॥ स्पर्शः स्यात्संपराये च प्रणिधावपि पुंस्ययं ॥ शत्रिः ॥ आदर्शो दर्पणे टीकाप्रतिपुस्तकयोरपि ॥१५॥ उड्डीशो ग्रंथभेदे स्यादुड्डीश श्चंद्रिकापतौ ॥ उपांशु जपभेदे स्यादुपांशु विजने ऽव्ययं ॥१६॥ कपिशा स्त्रिषु श्यावे स्त्री माधव्यां सिल्हके पुमान् ॥ कर्कशः काशमर्दे स्तु कांपिल्ये षष्व्यसो पुमान् ॥१७॥ त्रिषु साहसिके क्रूरे दृढामसृणनिर्दये ॥ कीनाशः कर्षकक्षुद्रोपांशुघातिषु वाच्यवत् ॥१८॥ यमेना कुलिशो नस्त्री दंभोलौ नाक्रमषांतरे ॥ गिरीशो ऽद्रिपतौ वाचस्पतिशंकरयोः पुमान् ॥१९॥ तुंगीश स्तु पुमान्गौरीवल्लभे हिमदीधितौ ॥ दुस्पर्शो धन्वयासे नाकंदकार्यां स्त्रियां त्रिषु ॥२०॥ खरस्पर्शेथ निस्त्रिंशः खड्गे ना निर्दये त्रिषु ॥ निर्वेश स्तु पुमान्भोगे वेतने मूर्छनेपि च ॥२१॥ निवेशः पुंसि विन्यासे शिबिरोद्वाहयोरपि ॥ निर्देशः शासनेपि स्यात्कथनोपांतयोरपि ॥२२॥ नीकाशो निश्चये तुल्ये पलाशं छदने मतं ॥ शटी किंशुकरक्षःसु पुंसि स्याद्धरिते त्रिषु ॥२३॥ प्रकाश स्तु स्फुटे ऽख्यात प्रहासातपयोरपि ॥ प्रदेशो देशमात्रे स्यात्तर्जन्यंगुष्ठसम्मिते ॥२४॥ भित्तावपि च पिंगाशी नीलिकायां नपुंसकं ॥ जात्यस्वर्णे पुमान्पल्लीपतौ मत्स्यांतरेपि च ॥२५॥ वालिश श्च शिशौ मूर्खे भूकेश शैवले वटे ॥ भूकेश्य वल्गुजेपि स्याल्लोमशो मुनिमेषयोः ॥२६॥ लोमान्विते स्त्रियां काकजंघामांसीवचासु च ॥ भूकशिंबिमहामेदाकाशीशीशाकिनीभिदि ॥२७॥ विवशस्त्रिष्ववश्यात्मारिष्टदुष्टधियोरपि ॥ विकाशः पुंसि विजने प्रकाशे सदृशः समे ॥२८॥ उचिते चाऽथ संवेशः स्वापस्त्रीरतबंधयोः ॥ सुखाशो वरुणे राजतिनिशे सुखभोजने ॥२९॥

हताशो निर्दये चाशारहितेपिशुनेपि च॥ शचतुः॥ अपदेशः पुमाँ
ल्लक्ष्ये निमित्तव्याजयोरपि॥३०॥ अपभ्रंशस्तु पतने भाषाभेदापश
ब्दयोः॥ आश्रयाशः पुमान्वन्हौ त्रिषु वाश्रयनाशके॥३१॥ उप
स्पर्शः स्पर्शमात्रे स्नानाचमनयोरपि॥ उपदंशो विदंशे च नेंद्ररो
गांतरेपि च॥३२॥ क्रूरहक्कृपिशुने वाच्यलिंगः पुंसि शनैश्चरे॥ खं
डपर्शुः पर्शुरामे शंकरे चूर्णलेपिनि॥३३॥ खंडामलकभैषज्ये सिद्धि
कांतनयेपि ना॥ जीविते शोयमे पुंसि त्रिषु स्याज्जीवितेश्वरे॥३४॥
नागपाशः पुमान्स्त्रीणां करणे वरुणायुधे॥ पंचदशी त्वमावा
स्या पौर्णमास्योश्च योषिति॥३५॥ प्रतिष्कशः सहायेस्याद्दू
र्तो हरपुरोगयोः॥ परिवेशो वेष्टने स्यात्परिधानेपि पुंस्ययं॥३६॥
पादपाशी खडुकायां शृंखलायामपि स्त्रियां॥ पुरोडाशो हविर्भे
दे च मस्यांपिष्टकस्य च॥३७॥ हुतशेषे च भूमिस्पृक् पुंसि मानववै
श्ययोः॥ इति शांतवर्गः॥ षैकम्॥ षः कचे पुंसि विज्ञे च श्रेष्ठे
स्यादभिधेयवत्॥ क्षः संवर्तेराक्षसे च नरसिंहे च विद्युति॥१॥
क्षेत्रे नाशे क्षेत्रपाले क्षि निवासे गतौ क्षये॥ षद्विः॥ अक्षो ज्ञाता
र्थ शकट व्यवहारेषु पाशके॥२॥ रुद्राक्षेंद्राक्षयोः सर्पे विभीतक
तरावपि॥ चक्रे कर्षे पुमान् क्लीबं तु स्थे सौवर्चले द्रिये॥३॥ उषा
बाणसुतारात्र्योः रुषः कामिनिगुग्गुलौ॥ रात्रिशेष उषायां तु के
चिदाहुस्तदव्ययं॥४॥ ऊषः स्यारमृदि प्रोक्तः प्रभातेपि पुमानयम्॥
तत्संध्यायां च रंध्रे च चंदनाद्रौ श्रवो बिले॥५॥ ऋषिर्वेद वसिष्टादौ
दीधितौ च पुमानयं॥ ऋक्षः पर्वत भेदे स्याद्भल्लूके शोणके पुमान्॥६॥
कृतवेधने न्यलिंगं नक्षत्रे पुन्नपुंसकं॥ कक्षा स्यादंतरीयस्य पश्चा
दंचलपल्लवे॥७॥ स्पर्धोपदे नादौ मूले कच्छवीरुत्तृणेषु च॥ कर्षो
ना कर्षणे मानप्रभेदे पुन्नपुंसकं॥८॥ कर्षूः पुमान्करीषाग्नौ स्त्रि
यां कुल्येष्टिखातयोः॥ काङ्क्षी तुवरिकायां च सौराष्ट्रमृद्यपि स्त्रियां
॥९॥ कोषो स्त्री कुड्मले पात्रे दिव्ये खड्गपिधानके॥ जातिकोशे

र्थसंघाते पेश्याशब्दादिसंगृहे ॥१०॥ घोष आभीरपल्ल्यां स्याद्गो
पालध्वनिघोषके ॥ कांस्ये चांबुदनादे ना घोषा मधुरिकौषधौ ॥
११॥ चोक्षो गीतेषु चौदक्षे तथा भीक्ष्णमनोज्ञयोः ॥ झषा नाग
बलायां स्त्री तापमत्स्याटवीषु ना ॥१२॥ तर्षो लिप्सोदन्ययोस्त्रि
टूकांतौ वा चिरुचौ स्त्रियां ॥ तुषो धान्यत्वगक्षद्रुस्तृषा लिप्सा
तृषो स्त्रियां ॥१३॥ तृट् लिप्सापामुदन्यायां स्मरपुत्र्यामपि स्त्रियां
॥ दक्षस्त्रिषु पटौ पुंसि ताम्रचूडे प्रजापतौ ॥१४॥ मुनिभेदे हरवृषे द्रु
मभेदे स्त्रियां भुवि ॥ दोषः स्याद्दूषणे पापे दोषा रात्रौ भुजेपि च ॥१५
ध्वांक्षो मत्स्यात्वगे काके तक्रौ टेभिक्षुकेपि च ॥ ध्वांक्षीक क्षो लिक्षा
यास्यान्नुसर्कत्स्यै तृणेपि च ॥१६॥ क्लीबेथ पुंसि मद्विषे निकृष्टे
पुनरन्यवत् ॥ पूक्षो जटी गर्दभांडद्वीपभित्कुंजराशने ॥१७॥ प
क्षो मासार्द्धके पार्श्वे गृहे साध्यविरोधयोः ॥ केशादे परतो वृंदे बले
सखिसहाययोः ॥१८॥ चुल्लीरंध्रे पतत्रे च राजकुंजरपार्श्वयोः ॥
प्रेक्षा नृत्येक्षणे बुद्धौ प्रैषः क्लेशे च मर्दने ॥१९॥ उन्माने प्रेषणे पौषो
मासे तत्पूर्णिमा तिथौ ॥ स्त्रियां भक्षा भृतौ याञ्चा से वा भिक्षितवस्तु
षु ॥२०॥ माषो व्रीह्यंतरे मूर्खे मानत्वग्दोषभेदयोः ॥ मिषं व्याजे
स्पर्द्धने ना मेषो राश्यंतरे स्तभे ॥२१॥ भैषज्यभिदि मोक्षस्तु मुक्ति
पाटलिमोचने ॥ यक्षो गुह्यकमात्रे च गुह्यकाधीश्वरेपि च ॥२२॥ र
क्षा नतु रक्षणयो रूक्षस्त्वप्रेमण्यचिक्कणे ॥ लक्षा न पुंसि संख्या
यां क्लीबं व्याजशरव्ययोः ॥२३॥ वर्षो ऽस्त्री भारतादौ च जंबूद्वीपा
ब्दवृष्टिषु ॥ प्रावृट्काले स्त्रियां भूम्नि विट् स्त्री व्यापनविष्ठयोः ॥२४
विषं तु गरले तोये विषायां च योषिति ॥ वृषो धर्मे बलीवर्दे शृंग्यां पुंरा
शिभेदयोः ॥२५॥ श्रेष्ठे स्यादुत्तरस्थश्च व्यासमूषिकशुक्रले ॥ तथा वास्तु
स्थानभेदे तु मानेपि प्रकीर्तित ॥२६॥ वृषा मूषिकपर्णी च सती लामासने
वृषी ॥ व्योषं स्यात्त्रिकटु द्व्येकरिभेदे पुमान्यं ॥२७॥ शुषिः शोषे बिले स्त्री
स्याच्छेषः संकर्षणे वधे ॥ अनंते नाप्रसादे न स्त्रनिर्माल्यार्पणे स्त्रियां ॥२८

उपयुक्तेतरेनस्त्रीशोषो यक्ष्मणिशोषणे ॥ षत्रिः ॥ अध्यासो
धिकृतेपुंसिस्यात्सत्यक्षेऽभिधेयवत् ॥२९॥ अभीषुः प्रग्रहेरश्मौ
नाकर्षोद्यूतइंद्रिये ॥ पाशकेशारिफलकेकोदंडाभ्यासवस्तुनि ॥
॥३०॥ आकर्षणेपिपुंसिस्यादामिषं पुन्नपुंसकं ॥ भोग्यवस्तु
निसंभोगेप्युत्कोचेपललेपिच ॥३१॥ उष्णीषं तु शिरोवेष्टेकिरीटे
लक्षणांतरे ॥ उत्प्रेक्षा नवधानेपिकाव्यालंकारणांतरे ॥३२॥ क
ल्मषंकिल्बिषेक्लीबंपुंसिस्यान्नरकांतरे ॥ कल्माषोयातुधानेस्त्र
कृष्णापांडवकृष्णयोः ॥३३॥ कलुषं त्वाविलेपापेकिल्बिषंपा
परोगयोः ॥ अपराधेपिकुल्माषंकांजिकेयावकेपुमान् ॥३४॥ गं
डूषो मुखपूर्तौभपुष्करप्रसृतोन्मिते ॥ गवाक्षी शक्रवारुण्यां
गवाक्षोजालकेकपौ ॥३५॥ गोरक्षो नागरंगेस्याद्गवांचपरि
रक्षके ॥ जिगीषाजेतुमिच्छायांव्यवसायप्रकर्षयोः ॥३६॥ तवी
षी शक्रकन्यायांपुंसिस्वर्गेमहोदधौ ॥ नावीषी चंद्रकन्यायां
नास्वर्गांबुधिकांचने ॥३७॥ नहुषो नागभेदेस्यात्सोमवंशनृ
पेपिच ॥ निकषः शाणफलकेनिकषायातुमातरि ॥३८॥ निमे
षनिमिषौकालप्रभेदेऽक्षिनिमीलने ॥ परुषं कर्बुरेरूक्षेनिष्ठु
रोक्तौचवाच्यवत् ॥३९॥ प्रदोषः समयेदोषेप्रत्यूषोहर्मुखेवसौ ॥
पीयूषं सप्तदिवसावधिक्षीरंतथाऽमृते ॥४०॥ पुरुषः पूरुषेसां
ख्यज्ञेचपुन्नागपादपे ॥ पौरुषं पुरुषस्यस्याद्भावेकर्मणितेजसि
॥४१॥ ऊर्ध्वविस्तृतदोःपाणिनृमानेत्वभिधेयवत् ॥ महिषीकृता
भिषेकायांसैरिभ्यौरोषधीभिदि ॥४२॥ मारीषः शाकभिद्यार्येना
ट्योक्त्यापुंसियोषिति ॥ दक्षांबायांमृगाक्षीतुविशालामृगनेत्र
योः ॥४३॥ रक्ताक्षःकासरेक्रूरेपारावतचकोरयोः ॥ रौहिषं क
तृणेक्लीबंपुंसिस्याद्धरिणांतरे ॥४४॥ विश्लेषो विधुरेयोगेशुश्रू
षा स्यादुपासने ॥ कथनेपातुमिच्छायांशैलूषो नटबिल्वयोः ॥
॥४५॥ संघर्ष स्तुपुमाल्लघ्रुष्टोस्पर्धायांचप्रभंजने ॥ समीक्षातु

स्त्रियांतत्त्वेभुद्रावपिनिभालने॥४६॥ षचतुः॥ अनुकर्षोरथाधःस्थदारुण्यप्यवकर्षणे॥अंबरीषं रणेभ्राष्ट्रेक्लीवंपुंसिनृपांतरे॥४७॥नरकस्यप्रभेदेचकिशोरेभास्करेपिच॥आम्रातकेऽनुतापेचानिमिषोमत्स्यदेवयोः॥४८॥अनुतर्षःसुरापानपात्रेतृष्णाऽभिलाषयोः॥अहिद्विड्गरुडेशक्रेमयूरेनकुलेपुमान्॥४९॥अलंबुष प्रहस्तेच छर्दनेराक्षसांतरे॥अलंबुषातुमुंडीर्यांस्वर्गवारांगनांतरे॥५०॥अथकिंपुरुषोलोकभेदकिन्नरयोःपुमान्॥देववृक्षः सप्तपर्णेमंदारादिषुगुग्गुलौ॥५१॥नंदिघोषोर्जुनरथेघोषेवंदिजनस्यच॥परिवेषस्तुपुल्लिंगःपरिधौरिवेषणे॥५२॥परिघोषोनिनादेस्यादवाच्येजलदध्वनौ॥पलंकषागोक्षुरकेरास्नागुग्गुलुकिंसुके॥५३॥मुंडीरीलाक्षयोश्वस्त्रीराक्षसेतुपलंकषः॥वीरवृक्षस्तुभल्लातककुभद्रुमयोःपुमान्॥५४॥भूतवृक्षस्तुशाखोटद्रुमेशोनाकपादपे॥महाघोषातुकर्कटश्रृंग्यांपुंस्यतिघोषणे॥५५॥क्लीवंहट्टेराजवृक्षसुवर्णालिपियालयोः॥वातरूषस्तुवातूलोत्कटयोशक्रकार्मुके॥५६॥विशालाक्षोहरेतार्क्ष्येनासुनेत्रेऽभिधेयवत्॥सकटाक्षोवराक्षेनाकटाक्षसहितेत्रिषु॥५७॥ इतिषांतवर्गः॥

सद्विः॥ कंसोस्त्रीतैजसद्रव्येकांस्यमानेसुरेतुना॥कासूर्विकलवाचिस्यात्तथाशक्त्यायुधेस्त्रियाम्॥१॥गुत्सः स्यात्स्तबकेस्तंबेहारभिद्ग्रंथिपर्णयो॥गोसो वोलीपसोश्वास दृक्षुपक्षिभिदोःपुमान्॥२॥त्रासो भयेमणेर्दोषेदासी वाणाभुजिष्ययोः॥दासो भृत्येचशूद्रेचज्ञातात्मनिचधीवरे॥३॥नासा तुनासिकायांचद्वारोर्ध्वदारुणिस्त्रियाम्॥प्रसू रश्वाजनन्योश्वकदलीवीरुधोःस्त्रिया॥४॥वस्र नीदेवभेदाग्निभायोक्त्रचकराजसु॥कुबेरश्चोषधेःश्वेचचौरेरत्नमधुरेत्रिषु॥५॥भासःपुंसिप्रभायांस्याद्गृध्रेषविहगस्यच॥भाःप्रभावेमयूखेस्त्रीमा

श्वंद्रमासयोः पुमान् ॥ ६ ॥ मांसं स्यादामिषे क्लीबं कक्कोलीजटयोः
स्त्रियाम् ॥ मिसिः स्त्री मधुरामांस्योः शतपुष्पाजमोदयोः ॥ ७
॥ मृत्सा कास्यां श्रेष्ठमृदि रसो गंधरसे जले ॥ शृंगारादौ विषे वीर्ये
तिक्तादौ द्रवरागयोः ॥ ८ ॥ देहधातुप्रभेदे च पारदस्वादयोः पुमान्
॥ स्त्रियां तु रसनापाठाशल्लकीकंगुभूमिषु ॥ ९ ॥ रासः कोलाह
ले ध्वाने भाषाशृंखलकेऽपि च ॥ क्रीडाभेदे च गोपानां वत्सः पुत्रा
दिवर्षयोः ॥ १० ॥ तर्णके नोरसि क्लीबं व्यासो ना विस्तृते मुनौ ॥
शंसा वचसि वांछायां हंसः स्यान्मानसौकसि ॥ ११ ॥ निर्लोभनृप
विष्ण्वर्के परमात्मनि मत्सरे ॥ योगिभेदे मंत्रभेदे शारीरमरुदंत
रे ॥ १२ ॥ तुरंगमप्रभेदेऽपि हिंसा चौर्यादिघातयोः ॥ सत्रिः ॥ अलसा
॥ हंसपद्यां ना पादरोगद्रुभेदयोः ॥ १३ ॥ क्रियामंदे त्रिष्वथार्चिर्म
यूखशिखयोर्न ना ॥ अदः परस्मिन्नत्र स्यादभ्यासोऽभ्यसनेंऽति
के ॥ १४ ॥ आगोऽपराधे पापे स्यादाश्वासः पुंसि निर्वृतौ ॥ आख्य
यिकापरिच्छेदे चाशीर्दंष्ट्रे (?) तेमरुद्रुजा ॥ १५ ॥ हितस्याशंसने स्त्री
स्यादिष्वासः कार्मुके पुमान् ॥ त्रिषु स्यात्क्षेपके चेषोरुच्छ्वासः प्रा
णनेऽपि च ॥ १६ ॥ आख्यायिकापरिच्छेदेऽप्याश्वासेऽपि पुमानयम्
॥ उत्तंसः कर्णपूरेऽपि शिखरेऽपि च न स्त्रियाम् ॥ १७ ॥ उषः प्रसू
षसि क्लीबं पितृप्रस्वां च योषिति ॥ उरो वक्षसि च श्रेष्ठेऽप्येनः पा
पपराधयोः ॥ १८ ॥ ओजो दीप्ताववष्टंभे प्रकाशबलयोरपि ॥
ओक आश्रयमात्रे च मंदिरे च नपुंसकं ॥ १९ ॥ कीकसः कृमिजा
तौ स्यात्पुंसि कुल्येन पुंसकं ॥ चमसो यज्ञपात्रस्य भेदे स्त्रीपि
ष्टके स्त्रियां ॥ २० ॥ छंदः पद्ये च वेदे च स्वैराचाराभिलाषयोः ॥ ज्या
यो वृद्धेऽतिप्रशस्ते ज्योतिरग्नौ दिवाकरे ॥ २१ ॥ पुमान्नपुंसकं
दृष्टौ स्यान्नक्षत्रप्रकाशयोः ॥ तरो बले च रोगे च तपो लोकांतरे
पि च ॥ २२ ॥ चांद्रायणादौ धर्मे च पुमान् शिशिरमाघयोः ॥ तमो
ध्वांते गुणे शोके क्लीबं ना लाविधुंतुदे ॥ २३ ॥ तामसी निशि दु

गोपातामसोभुजगेखले॥तेजोदीप्तौप्रभावेचस्यात्पराक्रमरेत
सोः॥२४॥धनुः पियालेनास्त्रीराशिभेदेशरासने॥धनुर्धरेत्रिषु
नभः क्लीबंव्योम्निपुमान्घने॥२५॥घ्राणश्रावणवर्षासुबिसतंतौप
तद्ग्रहे॥पनसः कंटकिफलेकंटकेवानरांतरे॥२६॥स्त्रियांरोग
प्रभेदेस्यात्पयः स्यात्क्षीरनीरयोः॥पायसस्तुक्लीबपुंसोः श्रीवा
सपरमान्नयोः॥२७॥पुक्कसी कलिकानील्योः पुक्कसः श्वपचे
ऽधमे॥बीभत्सो नार्जुनेक्रूरघृणात्मविकृतौत्रिषु॥२८॥भूयां
स्त्रिषुबहुतरेपुनरर्थेत्वदोऽव्ययं॥मनस्वितेमनीषायांमह
त्सवतेजसोः॥२९॥मानसंसरसिस्वांतेरभसोहर्षवेगयोः॥
रहस्तत्त्वेरतेगुह्येरजः क्लीबंगुणांतरे॥३०॥आर्तवेचपरागेच
रेणुमात्रेचदृश्यते॥राक्षसोयातुधानेस्याच्चंडायांराक्षसीस्मृता
॥३१॥रेपाः स्यादधमेक्रूरेकृपणेप्यभिधेयवत्॥रेतः शुक्रेपार
देचरोदश्वरोदसीतिच॥३२॥दिविभूमौपृथक्स्यात्सहोक्त्या
प्येतयोस्तथा॥लालसौत्सुक्यतृष्णातिरेकयाच्ञासुचद्वयोः॥
॥३३॥वयः पक्षिणिबाल्यादौयौवनेचनपुंसकं॥वर्चो नपुंसकं
रूपेविष्ठायामपितेजसि॥३४॥पुंसिचंद्रस्यतनयेबर्हिः पुंसिहुता
शने॥नस्त्रीकुशेवपुःक्लीबंतनौशस्ताकृतावपि॥३५॥वतंस
स्तुपुमान्कर्णपूरेशेखरयोरपि॥वाहसोजलनिर्याणेशयालेसुनि
षण्णके॥३६॥वायसोगुरुवृक्षेचश्रीवासध्वांक्षयोः पुमान्॥का
कोदुंबरिकायांचकाकमाच्यांचवायसी॥३७॥विद्वानात्मविदि
प्राज्ञेपंडितेचाभिधेयवत्॥विलासोहावभेदेस्याल्लीलायामपिपुं
स्ययं॥३८॥वितंसो बंधनोपायेमृगाणांपक्षिणामपि॥तेषाम
पिचविश्वासहेतोःप्रावरणेपिच॥३९॥वेधाःपुंसिहृषीकेशेबुधे
चपरमेष्ठिनि॥शिरः प्रधानेसेनाग्रेशिखरेमस्तकेपिच॥४०॥श्री
वासोवृकधूपेपिपंकजेमधुसूदने॥श्रेयो मुक्तौशुभेधर्मेत्रिप्र
शस्तेचपाच्यवत्॥४१॥श्रेयसीकरिपिप्पल्यामभयापाठयोरपि

सद्मो वत्सेज्योतिषि च पुंसि हृन्मेनमार्गयोः ॥४२॥ सरसी विम्बिका
सारसरो नीरलङ्गायोः ॥ स्यात्समासस्तु पुल्लिंगः संक्षेपे च सम
र्थने ॥४३॥ सारसः पक्षिभेदेऽब्जे क्लीबं तु गर्भमोरुहे ॥ साहसं तु ब
लात्कारकृतकार्ये दमेपि च ॥४४॥ सुरसस्त्वस्त्रि पुंस्याद्रीपणासि
तु नपुंसके ॥ स्त्रीरास्नानागमात्रोश्च स्रोतोस्तु वेगद्रंद्रिये ॥४५॥ ह
विर्हौतव्यमात्रे च सर्पिष्यपि नपुंसके ॥ सचतुः ॥ अधिन्यासो नि
वासे स्यात्संस्कारे धूपनादिभिः ॥४६॥ अवध्वंसः परित्यागे निंदने
ऽवचूर्णने ॥ अवतंसो ना स्त्रियां स्यात्कर्णपूरे च शेखरे ॥४७॥ अ
गोकाः पुंसि शरभे पक्षिपंचास्ययोरपि ॥ उदर्चिस्तु स्मरे वाच्यलिंगः
पुंसि हुताशने ॥४८॥ कलहंसस्तु कादंबे राजहंसे नृपोत्तमे ॥ कनी
यानतियूनि स्यादत्यल्पानुजयोस्त्रिषु ॥४९॥ कुंभीनसः क्रूरस
र्पे स्त्रियां लवणमातरि ॥ भवेद्घनरसः सांद्रनिर्यासे मोरटे तु ना
॥५०॥ कर्पूरे पीलुपर्ण्यां च सम्यक्सिंदूरसेपि च ॥ चंद्रहासो दश
ग्रीवकरवालेऽसिमात्रके ॥५१॥ जटायुः पुंसि संपातेः कनीयसि
च गुग्गुलौ ॥ अथ तामरसं पद्मे ताम्रकांचनयोरपि ॥५२॥ त्रिस्रो
ताजन्हुकन्यायां स्रोतस्वत्यां नरे स्त्रियां ॥ दिवोकाश्च दिवौकाश्च
पुंसि देवे च चातके ॥५३॥ दीर्घायुः शाल्मलीवृक्षवायसे जीवकद्रु
मे ॥ मार्कंडेये च पुंसि स्याच्चिरजीविनि वाच्यवत् ॥५४॥ नगौकाः
पुंसि शरभे पक्षिपंचास्ययोरपि ॥ निःश्रेयसं तु कल्याणमोक्षयोः
शंकरे पुमान् ॥५५॥ नीलांजसाप्सरोभेदे सरिद्भेदे च विद्युति ॥ प्र
चेताः पाशिनि मुनौ नाप्रकृष्टहृदि त्रिषु ॥५६॥ पुनर्वसुर्ना मुनिभि
द्यजे ह्लिले तु भांतरे ॥ पौर्णमासः पुमान्यज्ञभेदे स्त्री पूर्णिमातिथौ
॥५७॥ महारसः स्यात्खर्जूरे कोशकारकशेरुयोः ॥ मलीमसस्तु
मलिने पुष्पकाशीसलोहयोः ॥५८॥ भवेन्मधुरसा द्राक्षामूर्विका
दुग्धिकासु च ॥ यमस्वसा तु दुर्गायां यमुनायामपि स्त्रियां ॥५९॥
यवीयाननुजेपि स्यादतियूनि च वाच्यवत् ॥ रासेरसस्तु गोष्ठ्यां

स्याद्रसभृंगारयोरपि॥६०॥रससिद्धिरसावासषष्ठीजागरकेपि
च॥राजहंसस्तुकादंबेकलहंसेनृपोत्तमे॥६१॥वरीयान्योग
भिद्भेदेष्ववरिष्ठेष्वतियूनिच॥विहायाः शकुनेपुंसिगगनेपुन्नपुं
सके॥६२॥विभावसुःपुमान्सूर्येहारभेदेचपावके॥श्वःश्रेय
संचकल्याणेपरमात्मनिशर्मणि॥६३॥अथसर्जरसोवाद्यभां
डभेदेचधूपके॥सप्तार्चिःपावकेपुंसिक्रूरचक्षुषिचत्रिषु॥६४
साधीयानतिवाढेस्यादतिसाधौचवाच्यवत्॥सिंदूरसोरसेपुं
सिधातुप्रभृतिषुत्रिषु॥६५॥सुमनाःपुष्पमालत्योःस्त्रियांनाधी
रदेवयो। सुमेधास्तुस्त्रियांज्योतिष्मत्यांत्रिषुसुबुद्धिनि॥६६॥सपे
च॥दिव्यचक्षुःसुगंधस्यभेदेनांधेसुलोचने॥स्यान्नभश्वभसश्चं
द्रेचित्रापूपेंद्रजालयोः॥६७॥हिंगुनिर्यासइत्येषनिंबेहिंगुरसेपिच
॥सषट्॥हिरण्यरेता पुंसिस्याद्दिनाकरहविर्भुजोः॥६८॥इति
सांतवर्गः॥ हैकम्॥ हः शिवेसलिलेशून्येधारणेमंगलेपिच॥
गगनेनकुलीशेचरक्तेनाकेचवर्ण्यते॥१॥ हद्वि॥ अहिर्वृत्रासुरेस
र्पेपुंसीहोद्यमवांछयोः॥कुहूःस्त्रीकोकिलालापेनष्टेंदुकलदर्शयोः
॥२॥ग्रहोनुग्रहनिर्बंधग्रहणेषुरणोद्यमे॥सूर्यादौपूतनादौचसैंहिकेयोपरा
गयोः॥३॥ग्राहो ग्रहेऽवहारेचगुहःषाण्मातुरेगुहा॥सिंहपुच्छ्यां
चगर्तेचपर्वतादेश्चगह्वरे॥४॥गृहंगृहाश्चपुंभूम्निकलत्रेपिचस
द्मनि॥नाहस्तुबंधनेकूटेप्रोहो,गजांघ्रिपर्वणोः॥५॥वाच्यवन्नि
पुणेतर्केबर्हं पिच्छेदलेस्त्रियां॥बर्हस्यात्र्यादिसंख्यासुविपु
लेप्यभिधेयवत्॥६॥महीनद्यंतरेभूम्नामहउत्सवतेजसोः॥अ
थमोहोन्यलिंगस्यादविद्यायांचमूर्छने॥७॥लोहोऽस्त्रीशस्त्र
केलोहेजोंगकेसर्वतैजसे॥वहस्याद्वृषभस्कंधेवाहेगंधवहेपिच
८ वाहोभुजेपुमान्मानभेदाश्ववृषवायुषु॥व्रीहिःसामान्यधा
न्येस्यादाशुधान्येतुपुंस्ययं॥९॥व्यूह स्याद्बलविन्यासेनिर्मा
णेवृंदतर्कयोः॥सहोबलेनस्त्रियांस्यात्स्त्रियांतुनखभेषजे १०

हंडोस्यलामुद्गपर्णी कुमारीपृथिवीषु च ॥ सिंहः कंठीरवे राशौ सत्त मे चोत्तरस्थितः ॥ ११ ॥ सिंही तु कंटकार्यां स्याद्धार्नाको वासके पि च ॥ स्नेहः स्यात्पुंसि तैलादिरसद्रव्ये च सौहृदे ॥ १२ ॥ हत्रिः ॥ अ त्यूहो नीलिकायां स्त्री कालकंठखगे पुमान् ॥ आग्रहोनुग्रहा सक्त्योराक्रमे ग्रहणेपि च ॥ १३ ॥ आरोहस्त्ववरोहे च वरारोहा कटावपि ॥ आरोहणे गजारोहे दीर्घत्वे च समुच्छ्रये ॥ १४ ॥ उत्सा हस्तूद्यमे सूत्रे कटाहः कूर्मकर्परे ॥ द्वीपस्य च प्रभेदे स्यात्तैलादेः पाकभाजने ॥ १५ ॥ जायमानविषाणाग्रमहिषी शावकेपि च ॥ क लहः पुंसि काले ना खड्गकोशे च मंडने ॥ १६ ॥ दात्यूहस्तु पुमान् कालकंठचातकपक्षिणोः ॥ निग्रहो भर्त्सनेपि स्यान्मर्यादायां च बंधने ॥ १७ ॥ निर्व्यूहः शिखरे द्वारे निर्यासे नागदंतिके ॥ निरू हो वस्तिभेदे स्याद्दूहशून्ये च निश्चिते ॥ १८ ॥ प्रग्राहस्तु तुलासू त्रे वृषादिप्रग्रहेपि च ॥ पटहो ना समारंभे आनके तु नपुंसके ॥ १९ ॥ प्रवहस्तु बहिर्यात्रामातरिश्वप्रभेदयोः ॥ प्रग्रहस्तु तुलासूत्रे बंद्यां नियमने भुजे ॥ २० ॥ हयादिरश्मौ रश्मौ च सुवर्णा लुमहीरुहे ॥ प्रवाहस्तु प्रवृत्तौ स्यादपि स्रोतसि वारिणः ॥ २१ ॥ व राहः सूकरे विष्णौ मानभेदे द्रिमुस्तयोः ॥ वाराही मातृभेदे स्याद्वि ष्वक्सेनप्रियौषधौ ॥ २२ ॥ राजाहं जोंगके क्लीबं राजयोग्ये ऽभिधे यवत् ॥ विग्रहः काय विस्तारे विभागे तारणे स्त्रियां ॥ २३ ॥ विदे हः कायशून्ये स्याज्जनकान्वयभूमिपे वैदेही रोचना सीता वणि क्स्त्री पिप्पलीसु च ॥ २४ ॥ संग्रहो बृहदुद्रंगे ग्रहसंक्षेपयोरपि ॥ सुवहा शल्लकी पलापर्णी गोधापदी युवीणायाम् ॥ २५ ॥ रास्ना शेफालिकयोः स्त्री सुखवाह्ये न्यलिंग स्यात् ॥ हचतुः ॥ अव ग्रहो वृष्टिरोधे प्रतिबंधे गजालिके ॥ २६ ॥ अभिग्रहो ऽभिग्रहणे ऽभियोगेपि च गौरवे ॥ अवरोहोवतरणे प्यारोहे च लतोद्गमे ॥ २७ ॥ अश्वारोहा ऽश्वगंधायां स्त्रियां त्रिष्वश्ववाहके ॥ उपनाहो

व्रणालेपपिंडेवीणानिबंधने॥२८॥उपग्रहः पुमान्वंद्यासुप
योगेनुकूलने॥स्याद्गंधवाहो नासायां पुल्लिंगो मातरिश्वनि॥
॥२९॥तन्रुहं तुलोम्निस्यात्पतत्रेचनपुंसकं॥तमोपहः सहः
स्रांशुमृगांकाजिनवन्हिषु॥३०॥प्रतिग्रहःस्वीकरणेसैन्यपृ
ष्ठेपतद्ग्रहे॥द्विजेभ्योविधिवद्देयेतद्ग्रहेचग्रहांतरे॥३१॥परिग्र
हः परिजनेपत्न्यांस्वीकारमूलयोः॥शापेपरिवर्हौ राजयोग्य
द्रव्यपरिच्छदे॥३२॥परीवाहोजलोच्छ्वासेमहीभृद्योग्यवस्तु
नि॥पितामहो विरिंचौस्यात्तातस्यजनकेपिच॥३३॥महासहा
माषपर्ण्यामम्लाने।पिचयोषिति॥ हपंच॥ प्रपितामहइत्येवं
वेधौपितुःपितामहे॥३४॥इतिहांतवर्गः॥अथाव्ययानिव
क्ष्यंतेव्यक्तंपूर्वोदितैःक्रमैः॥अकाराद्यंततावास्मिंस्तस्माद्व्य
तिरिच्यते॥१॥अशब्दःस्यादभावेपिस्वल्पार्थप्रतिषेधयोः॥अ
नुकंपायांचतथावासुदेवेत्वनव्ययः॥२॥ आःप्रगृह्यंस्मृतौवा
क्ये।नुकंपायांसमुच्चये॥इभेदेवरुषोक्तौचापाकरणानुकंपयोः
॥३॥ईविषादेनुकंपायांलक्ष्म्यांपुनरनव्ययं॥उसंबोधनरोषोक्त्यो
रनुकंपानियोगयोः॥४॥पदपूरणेचपादपूरणे।पिचदृश्यते॥ऊ
वाक्यारंभरक्षा।नुकंपास्वपिचदृश्यते॥५॥ऋशब्दोगर्हणेवा
क्येदेवांबायांत्वनव्ययं॥ॠर्वाक्यारंभरक्षायांवक्षःस्मृतौ
रनव्ययः॥६॥देवांबायांदनौचापिभैरवेदनुजेगतौ॥ ऌकारोदे
वमातायांभुविक्रुधेचकीर्तितः॥७॥ॡकारोदेवनार्यांस्यान्नार्या
मन्यपिमातरि॥एस्मृतावप्यसूयानुकंपामंत्रिणहूतिषु॥८॥
ऐशब्दोदृश्यतेहूतौस्मृत्यामंत्रणयोरपि॥ओसंबोधनआह्वा
नेस्मरणेचानुकंपने॥९॥औशब्दःकथितोहूतौतथासंबोधने
पिच॥स्त्रीतुविश्वंभरायांस्यात्पुमांस्तुनिस्वनेस्मृतः॥१०॥केवं
॥कुपापेचेपदर्थेचकुत्सायांचनिवारणे॥ कहिः॥ धिग्भर्त्स
नेचनिंदायां॥ कत्रि॥ मनागप्यल्पमंदयोः॥११॥हिरुक्श

ऽविनार्थेचमध्यार्थेपिचदृश्यते॥गद्विः॥अङ्गसंबोधनेहर्षेसं
गमासूययोरपि॥१२॥ङद्विः॥आङ्सीमायामभिव्याप्तौक्रिया
योगेपदर्थयोः॥चैकं॥चान्वाचयेसमाहारेप्यन्योन्यार्थेसमुच्च
ये॥१३॥पक्षांतरेतथापादपूरणेप्यवधारणे॥चद्विः॥किंचारं
भेचसाकल्येप्राक्पूर्वस्मिन्नवांतरे॥१४॥अग्रेप्रभातेतीतेचदेश
दिक्कालयोरपि॥चत्रिः॥तिर्यक्तिरोर्थेवक्रेचविहंगादौत्व
नव्ययं॥१५॥ननुचप्रश्नदुष्टोक्त्योःसम्यक्दृढप्रशंसयोः॥ञ
द्विः॥नञभावेनिषेधेचस्वरूपार्थेप्यतिक्रमे॥१६॥ईषदर्थेचसा
दृश्येतद्विरुद्धतदन्ययोः॥ठद्विः॥सुष्ठुप्रशंसनेपिस्यादत्यर्थे
चनिगद्यते॥१७॥ठत्रिः अपष्ठुनिरवद्येचशोभनार्थेचदृश्यते
॥णचतुः॥अंतरेणपदंविद्याद्विनामध्यार्थयोरपि॥१८॥तैकं
तुपादपूरणेभेदसमुच्चयेवधारणे॥पक्षांतरेनियोगेचप्रशंसायां
विनिग्रहे॥१९॥तद्विः॥अतिशब्दःप्रशंसायांप्रकर्षेलंघनेपि
च॥नितांतासंप्रतिक्षेपवाचकोप्येषदर्शितः॥२०॥अस्तुस्या
दभ्यनुज्ञानेप्यसूयापीडयोरपि॥प्रतिक्षेपेप्रशंसायांप्रकर्षेल
क्षणेधिच॥२१॥असंप्रत्यर्थउद्दिष्टमितिहेतौप्रकाशने॥निदर्श
नेप्रकारेस्यात्परकृत्यनुकर्षयोः॥२२॥समाप्तौचप्रकरणेप्युत
त्यर्थेविकल्पयोः॥समुच्चयेवितर्केचप्रश्नेचपदपूरणे॥२३॥
उतस्वत्प्रश्नेवितर्केचचेत्कुत्सितप्रशंसयोः॥पक्षान्तरेप्यसाक
ल्येजातुशब्देविगर्हणे॥२४॥कदाचिदर्थेपितथाऽन्येविक
ल्पनिषेधयोः॥प्रतिप्रतिनिधाविस्थंभूताख्यानाभिमुख्ययोः
॥२५॥मात्रार्थभागवीप्सासुलक्षणप्रतिदानयोः॥बतामंत्रण
संतोषखेदानुक्रोशविस्मये॥२६॥स्वस्तिस्यान्मंगलेपुण्येप्या
शंसायामपिक्वचित्॥स्वित्प्रश्नेचवितर्केचतथैवपदपूरणे॥२७
हंतवाक्यारंभखेदविषादहर्षसंभ्रमे॥तत्रिः॥आराद्दूरेसमी
पेचकच्चित्कामप्रवेदने॥२८॥प्रश्नेहर्षेमंगलेचकिमुतप्रश्नवि

तर्कयोः॥विकल्पेतिशयेपिस्यात्तावन्मानेवधारणे॥२९॥संभ्रमेचपरिच्छेदेतथाकात्स्न्याधिकारयोः॥पश्यतस्यात्प्रशंसायांविस्मयेचनिगद्यते॥३०॥पश्चात्प्रतीच्यांपरमेप्यधिकारेपिदृश्यते॥मुहूर्तप्रश्नेवितर्केचयावत्कात्स्न्येवधारणे॥३१॥प्रशंसायांपरिच्छेदेमानाधिकारसंभ्रमे॥पक्षांतरेचशश्वत्स्यादात्मप्रश्नेचमंगले३२पुराकल्पेसदार्थेचपुनरर्थेचदृश्यते॥सकृत्सहैकवारेस्यात्साक्षात्प्रत्यक्षतुल्ययोः॥३३॥ तचतुः॥अहोवतानुकंपायांखेदेसंबोधनेपिच॥पुरस्तात्प्रथमेप्राच्यामग्रतोर्थपुरार्थयोः॥३४॥ थद्विः॥अथाथोसंशयेस्यातामधिकारेचमंगले॥विकल्पानंतरप्रश्नकात्स्न्यारंभसमुच्चये॥३५॥तथाभ्युपगमेपृष्टप्रतिवाक्येसमुच्चये॥सदृशेनिश्चयेपिस्याद्यथातुल्यार्थमानयोः॥३६॥प्रशंसायांवृथावंध्येनिष्कारणे॥थत्रिः॥न्यथापुनर्वितथेचापरार्थेचसर्वथाहेतुवादयोः॥३७॥ दद्विः॥ वतप्रकाशेविभागेचप्राबल्यास्वास्थ्यशक्तिषु॥प्राधान्येबंधनेभावेमोक्षेलाभोर्ध्व कर्मणोः॥३८॥ यतगर्हार्हेत्ववधृत्योर्यदिगर्हाविकल्पयोः॥ धद्विः॥अधिस्यादधिकारेचापीश्वरेचनिगद्यते॥३९॥ नैकम्॥ नस्यान्निषेधोपमयोर्निनिवेशभृशार्थयोः॥नित्यार्थेसंशयक्षेपकौशलोपरमेषुच॥४०॥सामीप्याश्रयदानेषुमोक्षांतर्भावबंधने॥राश्ययोभावविन्यासेनुवितर्कोपमानयोः॥४१॥विकल्पानुनयातीतेप्रश्नहेत्वपदेशयोः॥ नद्विः॥ अनुहीनेसहार्थेचपश्चात्सादृश्ययोरपि॥४२॥लक्षणेत्थंभूताख्यानभागवीप्सास्वनुक्रमे॥आयामेचसमीपेचकिंत्वप्रश्नवितर्कयोः॥४३॥चनविस्मयेसाकल्येननुशब्दोविनिग्रहे॥अनुप्रश्नेपरकृतावधिकारेचसंभ्रमे॥४४॥ आमंत्रणेप्यनुनयेप्रश्नानुज्ञावधारणे॥नानाशब्दोविनार्थेपितथानेकोभयार्थयोः॥॥४५॥स्थानेतुकरणार्थेस्याद्युक्तसादृश्ययोरपि॥पद्विः॥अप

स्यादपकृष्टार्थे वर्जनार्थवियोगयोः ॥ ४६ ॥ विपर्यये च विकृतौ चौर्ये निर्देशहर्षयोः ॥ अपि संभावनाप्रश्नशंकागर्हासमुच्चये ॥ ४७ तथा युक्तपदार्थेपि कामकारक्रियासु च ॥ उप स्यादधिकार्थे च हीनार्थासन्नयोरपि ॥ ४८ ॥ भद्विः ॥ अभीत्थंभूतकथने चाभिमुख्याभिलाषयोः ॥ मैकं ॥ मा वारणे विकल्पे च स्मातीते पादपूरणे ॥ ४९ ॥ स्यान्मंगलेपरकृता ॥ मद्विः ॥ वमोतिकसहार्थयोः ॥ आम् ज्ञाननिश्चये स्मृत्यौ रुम् रोषेंगीकृतावपि ५० ॥ प्रश्नेपि स्याद् उम् रुषोक्तौ पृच्छायामोमुपक्रमे ॥ प्रणवे चाप्युपगमे चापाकृतौ च मंगले ॥ ५१ ॥ कम् पादपूरणे तोयमस्तके च सुखेपि च ॥ किम् कुत्सायां वितर्के च निषेधप्रश्नयोरपि ॥ ५२ ॥ किमु संभावनायां स्यात् विमर्शे चापि दृश्यते ॥ नाम कोपेभ्युपगमे विस्मये स्मरणेपि च ॥ ५३ ॥ संभाव्यकुत्साप्राकाश्यविकल्पेपि च दृश्यते ॥ शम् कल्याणे सुखे स्तम् तु शोभनार्थे समर्थयोः ॥ ५४ ॥ संगार्थे च प्रहृष्टार्थे सामि निंदार्धयोर्मतं ॥ हम् रुषोक्तावनुनये हुम् स्मृतावप्यपाकृतौ ॥ ५५ ॥ अथ प्रश्नेऽभ्यनुज्ञायां हूम् स्यात्प्रश्नवितर्कयोः ॥ मत्रिः ॥ अलम् भूषणपर्याप्तिवारणेषु निरर्थके ॥ ५६ शक्तावेवम् प्रकारे स्यादंगीकारेवधारणे ॥ अथ प्रश्ने परकृताबुपमापृच्छयोरपि ॥ ५७ ॥ कथम् हर्षे च गर्हायां प्रकारार्थे च संभ्रमे ॥ प्रश्ने संभावनायां च कामम् चानुमतौ स्मृतं ॥ ५८ ॥ प्रकाशे चाप्यसूयायां तथानुगमनेपि च ॥ जोषम् सुखे प्रशंसायां तूष्णींलघनयोरपि ॥ ५९ ॥ नूनम् तु निश्चिते तर्के स्मरणे वाक्यपूरणे ॥ परम् नियोगेक्षेपे च प्राध्वम् नर्मानुकूलयोः ॥ ६० ॥ सत्यम् प्रश्नेऽभ्युपगमे ॥ मचतुः ॥ ऽवश्यम् नित्यप्रयत्नयोः ॥ अभीक्ष्णम् मुहुरश्रांते शीघ्रप्रकर्षयोरपि ॥ ६१ ॥ इदानीम् वाक्यभूषायां संप्रत्यर्थे च दृश्यते ॥ तद्दिनम् दिनमध्ये स्यात्तथैव प्रतिवासरे ॥ ६२ ॥ सांप्रतं चाधुनार्थे स्यादुचितार्थे च दृश्यते ॥ यद्विः ॥ अ

यिप्रश्नानुनय योस्तथासंबोधनेपिच॥६३॥अ ये क्रोधविषा देचसंभ्रमेस्मरणेपिच॥दिष्ट्याहर्षेमंगलेचपश्यशब्दस्तुविस्म ये॥६४॥प्रशंसायामपितथा॥ यत्रिः॥ समयांतिकमध्ययो॥ रेकम्॥ प्रप्रकर्षेगताद्यर्थे ॥रद्विः॥प्य रेणाकृत्यसूच यो॥६५ उर्यूरीचाप्युभौशब्दौविस्तारेगीकृतावपि॥दुर्निषेधेचदुष्टेचनि र्निर्णयनिषेधयोः॥६६॥परिस्यात्सर्वतोभावेवर्जनेव्याधिशेष योः॥इत्थंभूताख्यानभागवीप्सालिंगनलक्षणे॥६७॥ दोषाख्या नेनिरसनेपूजान्यास्योश्चभूषणे॥पराविमोक्षप्राधान्यप्रातिलोम्ये षुधर्षणे॥६८॥आभिमुख्येभृशार्थेचविक्रमेचगतौवधे॥पुरापु राणेनिकटेप्रबंधातीतभाविषु॥६९॥स्वःस्वर्गेत्यव्योम्निनाकेच॥र त्रिः॥प्रत्येतःस्वीकारमध्ययोः॥ अंतरापिविनार्थेस्यान्मध्यार्थे निकटार्थयो ॥७०॥ उरर्युरर्यूररीचविस्तारेंगीकृतौत्रयं॥न किर्निषेधोपमयोःप्रादुःप्राकाश्यइष्यते॥७१॥ संभाव्येचप्रवृत्तौ चपुनरप्रथमेमतम्॥अधिकारेचभेदेचतथापक्षांतरेपिच॥७२॥ लद्विः॥किलशब्दस्तुवार्तायासंभाव्यानुशयार्थयोः॥ खलु स्याद्वाक्यभूषायांजिज्ञासायांचसांत्वने॥७३॥ वीप्सामाननिषे धेषुपूरणेपदवाक्ययोः॥ वैकम्॥ वास्याद्विकल्पोपमयोर्वित र्केपादपूरणे॥७४॥समुच्चयेचविश्रंभेनानार्थातीतयोरपि॥वि निग्रहेनियोगेचतथैवपदपूरणे॥७५॥ निश्चयेसहनेहेतावव्याप्ति विनियोगयोः॥इषदर्थेपरिभवेशुद्धावलंचनेपिच॥७६॥ विज्ञाने वद्विः॥ थैवचोपम्येनियोगेवाक्यपूरणे॥ अवधारणेचवारनि योगेचविनिग्रहे॥७७॥ षद्विः॥उषारात्रौतदंतेच दोषारात्रौच तन्मुखे॥ मंक्षुशीघ्रेभृशार्थेच॥ षत्रिः॥ निकषांतिकमध्ययोः॥ ७८॥ सैकम्॥ सपूजायांभृशार्थानुमतिकृच्छ्रसमृद्धिषु॥सद्विः आस्मरणेपाकरणेकोपसंतापयोरपि॥७९॥ इदु-स्वभावनेक्षे पेनिर्निबंधेचनिश्चये॥साकल्यातीतयोर्भोस्तुसंबोधनविषादयोः

॥८०॥ स्त्रिः॥ अंजसाशब्दआख्यातस्तत्वतूर्णार्थयोरपि॥
तिरोंऽतर्द्धौतिर्यगर्थे नीचैःस्वैराल्पयोर्मतं॥८१॥पुरोऽग्रेप्रथ
मेभूयोऽधिकारेचपुनःपुनः॥मिथोऽन्योन्येरहोर्थेचशनैःस्वैरेश
नैश्चरे॥८२॥स्त्रचतुः॥अभितःशीघ्रसाकल्पसंमुखोभयतोंऽ
तिके॥अग्रतःप्रथमेचाग्रेपुरतःप्रथमाग्रयोः॥८३॥ पूर्वेद्युःप्रा
तःकालेस्यात्तथैवगतवासरे॥ हैकम्॥ हस्यात्संबोधनेपादपू
रणेचविनिग्रहे ८४ नियोगेचक्षिपायांस्यात्कुत्सायामपिदृश्यते
हाविषादेचशोकेचकुत्सादुःखार्थयोरपि॥८५॥ह्रिपादपूरणेहे
तौविशेषेत्ववधारणे॥प्रश्नहेत्वपदेशेचसंभ्रमास्तूययोरपि॥८६
ही दुःखहेतावाख्याताविषादेविस्मयेपिच॥ हे संबोधनआह्वाने
प्यसूयादौचदृश्यते॥८७॥हैसंबोधनआह्वाने हो हो शब्दौतथै
तयोः॥ हद्विः॥ अहप्रशंसाक्षिपयोर्नियोगेचविनिग्रहे॥८८॥अहो
धिगर्थेशोकेचकरुणार्थविषादयोः॥संबोधनेप्रशंसायांविस्मयेप
दपूरणे॥८९॥ असूयायांवितर्केस्यादाहक्षेपनियोगयोः॥आहोप्र
श्नेविचारेचसहसाकस्पदृश्यते॥९०॥विद्यमानेचसादृश्येयौगपद्यसमृ
द्धिषु॥संबंधेचतथाहीहीशब्दोविस्मयहास्ययोः ९१ हेहेसंबोधनेहू
तौहोहोशब्दस्तथैतयोः॥ हत्रिः॥अहहेत्यद्भुतेखेदेपरिक्लेशप्रकर्षयोः
९२॥संबोधनेऽपिचोताहोपरिप्रश्नविचारयोः॥ इतिव्ययानेकार्थवर्गः
॥उत्पलिनीशब्दार्णवसंसारावर्तनाममालाख्यान्॥भागुरिवररुचिशाश्व
तवोपालितरंतिदेवहरकोषान् १ अमरशुभांकहलायुधगोवर्धनरभस
पालकृतकोषान्॥रुद्रामरदत्ताजयगंगाधरधरणिकोषांश्च २ हारावल्य
भिधानंत्रिकांडशेषंचरत्नमालांच॥अपिबहुदोषंविश्वप्रकाशकोषंच
सुविचार्य ३ वाग्भटमाधववाचस्पतिधर्मव्याडितारपालाख्यान्॥अपि
विश्वरूपविक्रमादित्यनामलिंगानिसुविचार्य॥४॥कात्यायनवामनचं
द्रगोमिरचितानिलिंगशास्त्राणि पाणिनिपदानुशासनपुराणकाव्या
दिकंचसुनिरूप्य ५ षट्शतगाथाकोशप्रणयनविख्यातकौशलेनायं मे
दिनिकरेणकोशःप्राणाकरसूनुनारचितः ६ इतिमेदिनीकृतानेकार्थकोशः स॰

श्रीगणेशायनमः॥अथएकाक्षरकोशःप्रारभ्यते॥अकारोवासु
देवःस्यादाकारस्तुपितामहः॥पूजायामपिमांगल्येआकारपरि
कीर्तितः॥१॥इकारउच्यतेकामोलक्ष्मीरीकारउच्यते॥उकारशं
करःप्रोक्तऊकारश्चापिलक्षणे॥२॥रक्षणेचापिऊकारऋकारोब्र
ह्मणिस्मृतः॥ॠकारोदेवमातास्यात्ऌकारोदनुजप्रसूः॥३॥
ऌकारोदेवजातीनांमातासद्भिःप्रकीर्तिता॥ॡकारःस्मर्यतेपूर्वैर्जे
ननीशब्दकोविदैः॥४॥एकारउच्यतेविष्णुरैकारःस्यान्महेश्व
रः॥ओकारस्तुभवेद्ब्रह्माओकारोऽनंतउच्यते॥५॥अंस्याच्चप
रंब्रह्मअःस्याच्चैवमहेश्वरः॥कःप्रजापतिरुद्दिष्टःकोर्कवायुज्वल
नेषुच॥६॥कश्चात्मनिमयूरेचकःप्रकाशउदाहृतः॥कंशिरोज
लमाख्यातंकसुखंचप्रकीर्तितं॥७॥पृथिव्यांकुःसमाख्यातः
कुःशब्देपिप्रकीर्तितः॥खमिंद्रियेखमाकाशेखःस्वर्गेपिप्रकीर्ति
त॥८॥सामान्येचतथाशून्येखशब्दःपरिकीर्तितः॥गोगणेशः
समुद्दिष्टोगंधर्वोगःप्रकीर्तितः॥९॥गंगीतंगाचगाथास्यात् गौ
चधेनुःसरस्वती॥घाघंटाथसमाख्याताघोघनश्चप्रकीर्तितः॥
॥१०॥घंटीशेहननेघर्मेघुर्घोणाघूर्घ्नावपि॥॥ङकारोभैरवः
ख्यातोङकारोविषयस्पृहा॥११॥चश्चंद्रमाःसमाख्यातोभास्क
रेतस्करेमत॥निर्मलंछंसमाख्यातंतरलेछःप्रकीर्तितः॥१२॥छे
दकेछःसमाख्यातोविद्भिःशब्दकोविदैः॥जकारोगायनेप्रोक्तो
जयनेजःप्रकीर्तितः॥१३॥जेताजश्चप्रकथितःसूरिभिःशब्द
शासने॥रवौझकारकथितोनष्टेझश्चोच्यतेबुधैः॥१४॥झकारश्च
तथाचायोनेपथ्येसमुदाहृतः॥ञकारोगायनेप्रोक्तोञकारोझर्झ
रध्वनौ॥१५॥टोधरित्र्यांचकरकेटोध्वनौचप्रकीर्तितः॥ठकारो
जनतायांस्यात्ठोध्वनौचशठेपिच॥१६॥ठोमहेशःसमाख्यातो
ठःशून्येप्रकीर्तितः॥वृहद्ध्वनौचठःप्रोक्तस्तथाचंद्रस्यमंडले॥
१७॥डकारःशंकरेत्रासेध्वनौभीमेनिरुच्यते॥ढकारःकीर्तिता

ढक्कानिर्गुणेनिर्धनेमतः॥१८॥णकारस्त्वकरेज्ञानेनिश्चयेनिर्णयेपिच॥
तकारःकीर्तितश्चौरेक्रोडपुच्छेप्रकीर्तितः॥१९॥शिलोच्चयेथकारस्याथ्य
कारोनयरक्षणे॥दकारोभ्रे कलत्रेचच्छेदेदानेचदातरि॥२०॥धंधनेस्त्रधे
धस्यात्द्विधातरिमनावपि॥धिषणाधीःसमाख्याताधूश्चैवभारचिंतयोः
२१॥नेतानश्चसमाख्यातस्तरणौनःप्रकीर्तितः॥नकारःसौगतेबुद्धौस्तुतौ
वृक्षेप्रकीर्तितः॥२२॥नशब्दःस्वागतेवंधौवृक्षेसूर्येचकीर्तितः॥पःकुबेरःस
माख्यातःपश्चिमेचप्रकीर्तितः॥२३॥पवनेपःसमाख्यातःपस्यात्पानेचपा
तरि॥फःकवातेफकारःस्यात्तथाध्मानेप्रकीर्तितः॥२४॥फूत्कारेपिचफः
प्रोक्तस्तथानिष्फलभाषणे॥बकारोवरुणःप्रोक्तःकलशेवःफलेपिच२५
वक्षस्थलेचवःप्रोक्तोगदायांसमुदाहृतः॥नक्षत्रेभंबुधाःप्राहुर्भवनेभः
प्रकीर्तितः॥२६॥दीप्तिर्भास्याच्चभूर्भूमिर्भीर्भयेकथितंबुधैः॥मःशिवश्चं
द्रमावेधामालक्ष्मीश्चप्रकीर्तिता॥२७॥माचमातरिमानेचबंधनेमःप्रकी
र्तितः॥यशोयःकथितःप्राज्ञैर्योवायुरितिशब्दितः॥२८॥यानेयातरियः
स्त्यागेकथितःशब्दवेदिभिः॥रश्चरामेनिलेवन्हौभूमावपिधनेपिच॥
२९॥इंद्रियेधनरोधेचरुर्भयेचप्रकीर्तितः॥लोदीप्तौद्यांलश्चभूलोभ
येचाल्हादनेपिच॥३०॥लोवातेलवणेचस्याल्लोदानेप्रकीर्तितः॥
लःश्लेषेचाशयेचैवप्रलयेसाधनेपिलः॥३१॥मानसेवरुणेचैवलु
कारःसांत्वनेपिच॥विश्वपक्षीनिगदितोगगनंप्रतिकीर्तितं॥३२॥शं
सुखंशंकरःश्रेयःशश्चसीम्निनिगद्यते॥शयनेशःसमाख्यातोहिंसा
यांशोनिगद्यते॥३३॥षःकीर्तितोबुधैःश्रेष्ठश्चगंभीरलोचने॥उपसर्गे
परोक्षेचषकारःपरिकीर्तितः॥३४॥सःकोपेवरणेसःस्यात्तथाशूलिनिकी
र्तितः॥साचलक्ष्मीबुधैःप्रोक्तागौरीसाचसदैश्वरः॥३५॥हःकोपेवारणेह
श्चतथाशूलीप्रकीर्तितः॥हिःपद्यावरणेप्रोक्तोहिस्याद्धेतुवधारणे॥३६॥क्षः
क्षेत्रेवक्षसिप्रोक्तोबुधैःक्षःशब्दशासने॥क्षिःक्षेत्रेसत्वरक्षेचनृसिंहेच
प्रकीर्तितः॥३७॥आगमेभ्योभिधानेभ्योधातुभ्यःशब्दशासनात्॥
एवमेकाक्षरंनामाभिधानंक्रियतेमया॥३८॥ ॥इत्येकाक्षरकोशःसमा

श्रीगणेशायनमः॥ प्रबोधमाधातुमशाब्दिकानांरूपमुपेत्यापि
सतंकवीनाम्॥ कृतोमयारूपमवाप्यशब्दभेदप्रकाशोऽखिल
वाङ्मयार्थः॥१॥ विद्यादगारमागारमपगामापगामपि॥ अराति
मारातिमथोअमआमः प्रकीर्तित॥२॥ भवेदमर्षआमर्षअंकुरो
ऽकुरएवच॥ अंतरिक्षमंतरीक्षमगस्त्योऽगस्तिरेवच॥३॥ अटरूप
श्चाटरूपोऽवशायोऽपश्यायएवच॥ पतिश्यायः प्रतिश्यायोभल्लू
कोभल्लुकोऽपिच॥४॥ उल्मूकमुल्मुकंप्राहुः शंबूकमपिशंबुकम्
॥जतु कास्याज्जतूकापिमसूरोमसुरोमतः॥५॥ वास्तुकंचापि
वास्तूकेदेवकीदेवकीतिच॥ ज्योतिषंज्यौतिषं चःपिष्ठे
वनंष्ठीवनतथा॥६॥ सूत्रामापिचसुत्रामादनूमान्हनुमानपि॥
उषणंस्यादूषणंचभवेदुषरमूषरम्॥७॥ बंधूरबंधुरंचस्यादूरी
कृतमुरीकृतम्॥ वाल्हिकंचापिवाल्हीकंगंडीवगाण्डिवंतथा॥
॥८॥ उषाप्यूषाननन्दाचननान्दाचप्रकीर्तिता॥ चडालोऽपिचचां
डालोवादान्योऽपिवदान्यवत्॥९॥ हालाहलंहालहलंवदन्त्य
पिहलाहलम्॥ प्रचहालंहहालंचहाहलंचापिचक्षते॥१०॥ प्र
क्वाण प्रक्वणश्चापिश्यामाकाश्यामकेपिच॥ सहाचरःसहचरः
स्फाटिकंस्फटिकंतथा॥११॥ गन्धर्वोऽपिचगांधर्वश्चमरश्चाम
रस्तथा॥ चोरश्चौरश्चटुश्चाटूश्चोलश्चेलश्चमुश्चमू॥१२॥ चंचु
श्चञ्चूस्तलस्तालःश्यामलःशवलस्तथा॥ धान्याकमपिधन्या
कंपुतकंपोतकंतथा॥१३॥ कवाटंचकपाटंचकविलंकपिलंत
था॥ करवालःकरपालोवनीपकवनीपकौ॥१४॥ पारावतःपा
रापतोजरास्याज्जरयासह॥ जटायुपंजटायुंचविद्यादायुस्तथायु
षा॥१५॥ सायंसायोभवेत्कोशःकोशशूण्डंचशुंडवत्॥ भावुकं
भविकचापिमूसलंमुसलंतथा॥१६॥ वेशोवेषश्चकथितोबुसो
ऽपिस्याद्बुषस्तथा॥ स्याद्धनुर्धनुषासार्द्धंजरसाचजरांविदुः १७
सूकरःसूकरोऽपिःस्यात्सृगालश्चसृगालवत्॥ सूरःसूरश्चक

श्वितः कलसः कलशोऽपि च ॥ १८ ॥ सुनासीरः सुनासीरो नाराय
णो नारायणो ॥ यातुधानो जातुधानो लक्ष्मणो लक्ष्मनोऽपि च १९ श्वसु
रः श्वशुरोऽपि स्याच्चारित्र्यं चरित्रं तथा ॥ पारदं पारतं वा सावासकं
कृमिणा क्रिमि ॥ २० ॥ त्रिफला त्रिपला चापि कुशरा किशरापि च ॥
॥ भवे वृष्टिस्तथा त्विष्टिः श्रियालः स्यात्सियालवत् ॥ २१ ॥ कलाटी
नः कराटीनो वलिशो वडिशोऽपि च ॥ संकरः शंकरोऽपि स्यान्मङ्गलो
मुङ्गलोऽपि च ॥ २२ ॥ मद्गुरो मुद्गरश्चापि मकुटो मुकुटस्त्विह ॥ सुकृतं
सूकृतं चापि चुलुकं चूलुकं तथा ॥ २३ ॥ करञ्जः करजोऽपि स्यात्परतः
प्रेत उच्यते ॥ कर्शीरोऽपि च कीर्मिरो हायनं हयनं स्मृतम् ॥ २४ ॥ शौ
टीर्यमपि शौण्डीर्यं ज्येष्ठो ज्यैष्ठोऽपि दृश्यते ॥ सौदाम्नी च सुदाम्नी
च सौदामन्यपि दृश्यते ॥ २५ ॥ जठरो जटरोऽपि स्यान्निमेषो निमिषोऽपि च
॥ बुकोऽवंकस्य कुसुमे मदनो मल्ययो द्रुमे ॥ २६ ॥ आरग्वधोऽग्वधो
च खुरखा सुरका वपि ॥ पृश्निः पृष्णिश्च सरपूः सरयुश्च निगद्यते ॥ २७ ॥
नीलंगुरपि नीलांगुरीश्वरी चेश्वरापि च ॥ तर्पिंचमपि तांपिंच त्रपु
षं त्रिपुषं तथा ॥ २८ ॥ हिंडिरोऽपि च हिंडीरः परस्त्रुं परशुना सह ॥ वालु
का वालिका चापि दोर्दोषोऽपि भुजा भुजः ॥ २९ ॥ बाहुर्बाहा तृषा तृ
ष्णा संध्या स्यात्संधिना सह ॥ भगिनीमपि भग्नीं च झल्लरीं झिल्ली
रीं विदुः ॥ ३० ॥ वेत्रं च वेतसा सार्द्धमेधमाहुस्तथैन्धसा ॥ सम्वलनं
सम्वरणं तनु नीतरूणीति च ॥ ३१ ॥ प्रमदावचनं प्रमदवचनं परी
कीर्तितं ॥ स्वर्लिका सुरलीका वज्रं वज्रोशनिस्तथा ॥ ३२ ॥ शिलं
मुच शिलींचं च भवेन्मुचं शिलं तथा ॥ वासुदेवोऽपि वासुः स्याद्वा
सुदेवोऽपि वासवः ॥ ३३ ॥ आशी आश्याऽहिदंष्ट्रा पां लक्ष्मिर्लक्ष्मी
हरेः प्रिया ॥ रुचकौ रुचुकौ प्रोक्तौ पुरुचूकश्च तादृशः ॥ ३४ ॥ कु
मुदं कुमुदश्चापि योषिता योषिदित्यपि ॥ शरद्भवेच्छरदया प्रावृ
[illegible]मावृषया सह ॥ ३५ ॥ नगस्तु नगसा सार्द्धं वपश्च तपसा सह ॥ स
हस्तु सहसा सार्द्धं महस्तु महसा सह ॥ ३६ ॥ तमस्तु तमसा प्रोक्ता र

उमादुर्गाःतसीन्वाथपीडायांवीचिवेगयोः॥वस्त्रसूक्ष्मेचरेखा
यांचोर्मिःस्त्रीपुंसयोमर्तः॥५०॥कुसुमंस्त्रीरजःपुष्पेक्षेमंक॰
ल्याणरक्षयोः॥क्षेमाचंडाऽथकलमालेखनीचौरशालयः॥५१
रेतोनिकामकाम्येषुकामंपुंसिस्मरेछयोः॥क्षौममट्टेदुकूलेच
ग्रामःसंवसथेस्वरे॥५२॥गुल्मःस्तंबेघट्टभेदेघर्मःस्वेदातपो
ष्मसु॥जिह्मःस्यात्कुटिलेमंदेतलिमंतल्पकुट्टिमे॥५३॥तोक्मं
कर्णमलेपुंसिहरितेचहरियवे॥द्रुमोपक्षेश्वरेवृक्षेदमोदमथुदं
डयोः॥५४॥धर्मोऽहिंसोपमायोगोपनिषत्सुधनुष्यपि॥कटेकुं
ड्याचनिगमोनियमोनिश्चयेव्रते॥५५॥यंत्राणांबंधयोश्चाथ
पंचमःस्वरसंख्ययोः॥पद्मोस्त्रीविंदुजालेऽब्जेव्यूहेसंख्यांतरे॰
निधौ॥५६॥प्रेमानांदेतरबंधेपिप्रतिमास्तुहतावपि॥भूमिःस्थाने
पिक्ष्मांशुनिर्गमक्रांतिसुभ्रमः॥५७॥गांगेयभीषणोभीष्मोभीमः
शंभौचपांडवे॥नरकेमंगलेभौमःस्वरेमध्येचमध्यमः॥५८॥य
मःसंयमकीनाशयुग्मजेष्वथराघवे॥रामःपशौभार्गवेचरुक्मं
लोहसुवर्णयोः॥५९॥संपत्कमलयोर्लक्ष्मीर्विभ्रमोभ्रमहाव
योः॥श्यामागुंद्राकोकिलाचश्रामोमंडपकालयोः॥६०॥सार्व
भौमोगजेराज्ञिसंभ्रमौसाध्वसादरौ॥इतिमांताः॥भिन्नास
मानयोरन्यःस्याद्भिख्यायशस्यपि॥आत्रेयीपुष्पवत्यांस्या
न्नदीभेदेचनासुनौआश्रयःस्कंधआधारेआदित्योभास्करेसु
रे॥६२॥वेदोपदेशावाम्नायौहृषीकेरतसींद्रियं॥इज्यास्यात्सं
गमेदानेयागेर्चायांगुरौपुमान्॥६३॥उदयोऽद्रावुन्नतौचकषायः
सुरभौरसे॥कायःस्वभावेलक्ष्येचसंघेमूर्तौकदैवते॥६४॥कौकृ
त्यमनुतापेस्यादयुक्तकरणेपिच॥कश्यंकशार्हेमद्येचकाद्र
वेयाःद्विरंगयोः॥६५॥काव्यंप्रबंधेशुक्रेनाकुलायःस्थाननी
डयोः॥गव्यंगोहितदुग्धादौज्यायांगव्यातुगोकुले॥६६॥भीष्म
नादेह्निगांगेयंगोप्यौगोप्तव्यचेटकौ॥गातव्यगायनौगेयौगृह्य

मस्वैरिपक्षयोः॥६७॥ चैत्यमायतने बुद्धविंबेोद्देशकवृक्षयोः॥ च
सुष्यं स्कभगेचक्षुर्हितेस्त्रीकेतकेपिच॥६८॥ युद्धेदृढेचजन्यं
स्याज्जन्यास्यान्मोन्योक्षितावपि॥ कूटायुर्गुग्गुलुड्रोचत्रिवेधा
त्रितयेत्रयी॥६९॥ निंद्येवस्त्रगृहेदूष्यंदस्यूतस्करवैरिणो॥ भे
षजेद्रुविकारेचद्रव्यंभव्येचपित्तले॥७०॥ द्वितीयातिथिभित्य
ल्पोःपार्थेग्नौचधनंजयः॥ निकायेोसंघनिलयौनित्येसतत
शाश्वते॥७१॥ पर्यायःस्यात्प्रकारेपिप्रायोनाभूमतुल्ययोः॥
पथ्यं हितेभयापथ्यापानीयंपेयनीरयोः॥७२॥ पौलस्त्यौराव
णश्रीदौस्वर्गलाभौफलोदयौ॥ ब्राह्मण्यंब्रह्मसंघेपिबालेयौमृ
दुगर्दभौ॥७३॥ वीर्यंप्रधानधातौचभयंभीकुब्जपुष्पयोः॥ अन
धीनेसहायेचभुजिष्यौहस्तसूत्रयोः॥७४॥ स्यान्मायाशांबरीबु
द्धौदैत्यशिल्प्युष्ट्रयोर्मयः॥ मयुरश्वेक्रतुहयेरूप्यंत्रिषुसुरूपके
॥७५॥ आहतस्वर्णरजतेरजतेचनपुंसकं॥ वत्सेवलेबुधेरोहि
णेयोथश्लेषवाद्ययोः॥७६॥ लयोयुक्तेचलभ्यस्याद्विषयौदेश
गोचरौ॥ वर्गप्रस्थानयोर्व्रज्यावदान्यस्त्यागवान्कवाक्॥७७॥
स्त्रीमल्यांनिर्जनेशून्यंशौर्येचारभटीबलं॥ शांडिल्यौमुनि
मालूरौसौरभ्यचारुतापिच॥७८॥ साध्यादेवाःफलंसाध्यंस्थे
यौनेतृसुरोहितौ॥ नाशेलेसह्यमारोग्येसामर्थ्यंशक्तियोग्यते
॥७९॥ एकत्वादौविचारेचसंख्याक्लीबेचसंयुगे॥ हिरण्यंरेतसि
स्वर्णमानभेदवराटयोः॥८०॥ उरस्यपिचवुक्कापौहृदयंमान
सेपिच॥ इतियांताः॥ अंकुरोरोम्णिरुधिरेवारिण्यभिनवोद्भि
दि॥८१॥ असरानाभिनालापांगुडूच्यामप्यथांबरं॥ नागभि
न्नेधद्रव्यंचस्यादस्त्रंरुधिराश्रुणोः॥८२॥ प्रस्तावेवसरोवर्षेचो
ष्ठनीचेपिचाधरः॥ श्रेष्ठेप्यग्रोःवतारस्तुतीर्थेवतरणेपिच॥८३॥
गलहस्तेप्यर्धचंद्रोकूपारःकमठेबुधौ॥ अक्षातेस्त्रीकुंजेगा
रःश्रेष्ठवाच्यवनुत्तरौ॥८४॥ नक्रेचौरेचावहारःस्यादभ्रंव्योम

मेघयोः॥ हविर्वन्हौ चाग्निहोत्रे वस्ले लघुनि चा गुरुः॥ ८६॥ शक्तो पि षंडश्चांडीरा वंघ्रिः स्यात्पादमूलयोः॥ आसारः प्रसरणे स्याद्वेगवृष्टौ सुहृद्बले॥ ८७॥ आरः शनैश्चरे भौमे द्रुंद्रु आत्मनिवासवे॥ गौरीश्वरी शिवा स्वामिकं दर्पे पीश्वरः पुमान्॥ ८८॥ उदारो दक्षिण स्थूलो द्रुमे मेद्रेष्वुदुंबरः॥ उग्रोंत्यजे शिवे स्फव्वे उस्त्रो दीप्तो गवि स्त्रियां॥ ८९॥ सिंहस्टा सुपुन्नागे वकुले नागकेसरे॥ केसरः पुंसि किंजल्के न स्त्री हिंगुनि नह्वयोः॥ ९०॥ मक्षिकायामपि क्षुद्रा क्षुद्रः स्यात्कृपणे त्रिषु॥ कद्रुस्त्रिषु कडारे स्यात्कद्रुः स्त्री नागमातरि॥ ९१॥ नापितस्योपकरणे कोकिलाक्षे पि च क्षुरः॥ भस्मकाचरसाः क्षाराः कारुः कारकशिल्पिनोः॥ ९२॥ कर्बुरो राक्षसे पापे कर्बुरं शबले जने॥ कारा पीडाबंधशाले क्रूरौ कठिन भीषणौ ९३ जंबुद्वीपसहा कन्याः कुमार्योश्वाश्ववारके॥ बालके कार्तिकेये च कुमारो भर्तृदारके॥ ९४॥ कलिकारस्तु धूम्याटे करंजे पीतमस्तके॥ सिन्दूरस्थाने पि च क्षेत्रं कर्करो दृढ दर्पणौ॥ ९५॥ शिंशपायां कृष्णसारस्तु च्यांचोथोत्पले पि च॥ कर्णपूरः कुबेरस्तु नंदी वृक्षे कपिंगयोः॥ ९६॥ कुशरीरे च शठ्यां च कच्छुरा पामरे त्रिषु॥ कंदरः स्यात् गुहास्नण्योः कोष्टारौ कूपनागरौ॥ ९७॥ कपोले च कटाहे च शस्त्रभेदे च कर्परः॥ भिक्षापात्रे कपाले च खर्परः स्तस्करे पि च॥ ९८॥ देवताडे खरा स्त्री स्यात्खरो गर्दभतीक्ष्णयोः॥ भद्रमुस्ते गुवाके च खपुरोथ द्रुमे पुमान्॥ ९९॥ रूप्ये खले च खर्जूरं खुरः कोलदले शफे॥ खरुरश्वे हरे दर्पे दंते श्वेते तु वाच्यवत्॥ ॥ ४००॥ गुरुस्त्रिलिंग्यां महति दुर्जरालघुनोरपि॥ गायत्री खदिरे स्त्री स्याछंदस्यपि षडक्षरे॥ १॥ गुंद्रस्तेजनके गुंद्रा त्रिलिंग्यां भद्रमुस्तके॥ गव्हरे हे गुहा गुंजे पूर्द्वारि द्वारि गोपुरं॥ २॥ नग्नक न्योभयो गौरी गौरः स्यादुज्ज्वले पि च॥ गोत्रं नाम्नि कुले पुंसि शैले भूगव्ययोः स्त्रियां॥ ३॥ खरे रणे च गोधा रो गृध्रः स्याल्लोभि पक्षिणोः॥

कर्बुरे तिलके चित्रं सुभद्रातारयोः स्त्रियां ॥४॥ चंद्रः शशिनि कर्पू
रे चारो बंधापसर्पयोः ॥ मृते देवकुले चैत्रं नाभूःभ्रन्मासभेदयोः ॥
॥५॥ सर्पे विष्णौ चक्रधरश्चिकुरो रुक्षभित्कचौ ॥ चक्रं कोके व्रजे
पुंसि क्लीबे सैन्यरथांगयोः ॥६॥ ग्रामजाले कुंभकारभांडे राष्ट्रे च दृ
श्यते ॥ नदप्रभेदे वाद्ये च झर्झरोथ गुणध्वनौ ॥७॥ प्रसिद्धावपि टं
कारस्तारो त्युच्च स्वरे त्रिषु ॥ तारिण्यंगदमात्रो स्त्री नना ऽक्ष्णोः
क्षिमध्ययोः ॥८॥ तामिस्रं धेतिमिरं ध्वांते तोत्रे प्राजनवेणुके ॥ ध
न्याके तुंबरीं स्त्रुन्यांताम्रं शुल्वे रुणे त्रिषु ॥९॥ पेटके ना विचत्व
री तुषारः शीकरे हिमे ॥ दूतिकर्त्तव्यता तंत्रं सुपायश्च वहिसाध
कः ॥१०॥ तीव्रं कटुनितांतं च दर्दरः शैलभुग्नयोः ॥ उपायेनिर्ग
मे द्वारं दारुस्याद्देवदारु च ॥११॥ दासीसुतो द्रौ दासेरो देहयात्रा
शने मृतौ ॥ दिगंबरो ध कारे च वाद्यमेघौ च दर्दुरौ ॥१२॥ धात्री
भुव्यामलक्यां च हरिशैलौ धराधरौ ॥ धारा हरिद्राश्वगतिनि
शांबुसृतिराजिषु ॥१३॥ धराधरौ खड्गमेघौ धीरः पंडितमंद
योः ॥ धीरं च कुंकुममथो धरा पृथ्वी धरो गिरिः ॥१४॥ नेत्रो नेत
रि नेत्रं च गुणे मूले विलोचने ॥ नारं शुंठ्यां नरो पे च नरो जेमान
वे ऽर्जुने ॥१५॥ नरेंद्रो राजि केराज्ञि विषवैद्येपि दृश्यते ॥ धान्योत्से
पे निकारः स्याद्दुडुच्यामपि निर्जरा ॥१६॥ नभश्चरो पक्षि
देवौ पांशुलाच निशाचरी ॥ वल्मीकवनयोर्नीव्रं पूरः स्वाद्येप
यश्चये ॥१७॥ सत्कारेभौ परिकारौ खड्गफलेपि पुष्करं ॥ नद्यं
तराले पात्रं स्याद्भांडे चाथ निशापतौ ॥१८॥ पृथक्चरो गजे पूथ
भ्रष्टे पक्षचरः स्मृतः ॥ स्याल्यां मंथेपि पिठरं पवित्रं कुशमे
ध्ययोः ॥१९॥ देहोपाटलिपुत्रे च पुरं स्यात्स्गुग्गुलौ पुरः ॥ वरो
जामातरि रते कुंकुमे च नपुंसकं ॥२०॥ वक्रः शनैश्चरे क्रूरे पुटभेदे
तथा नृजो ॥ कुब्जरसे द्वारे वारो बंधुरं रम्यनम्रयोः ॥२१॥ भ्र
मरः कामुके भृंगे भरो तिशयभारयोः ॥ विषे स्वादौ च मधुरं मल्लि

कासंचमाधुर्यं॥२२॥ मखाग्नौचमदावीरोमक्षिकायांचमत्सरः॥महेंद्रेभूधरेशक्रेदवचक्रेचमंथरः॥२३॥ विभ्रमन्मथयोर्मारो मकरोराशियादसोः॥गमनोत्सवयोर्यात्रारुधिरंकुंकुमेपिच॥२४॥ वृक्षभित्पापयोर्वज्रोदैत्यभेदेमृगेरुरुः॥लंबोदरःस्यादुद्भूनेगणानामधिपेपिच॥२५॥ लक्ष्मीपुत्रौस्मरहयौविस्तारौस्तंभविस्तृती॥विप्रस्त्रातेस्त्रियाक्षेत्रेचयेरेणौनरोधसि॥२६॥ स्यादुस्त्रेरेचनक्षत्रेवक्षूरंगहनेपिच॥ वल्लूरंत्रिषुसंशुष्कमांसशूकरमांसयोः॥२७॥ वैकल्येपिचविश्लेषेविधुरंविकलेत्रिषु॥विकारौविकृतेरोगेविष्वक्दूश्वभित्वलौ॥२८॥ वरांगेकुंकुमेवेरंवेठरःशठमंदयोः॥अथव्यतिकरःपुंसिव्यसनव्यतिषंगयोः॥२९॥ पर्याणेऽक्षोपकरणेशारिःशकुनिकांतरे॥श्रीर्लक्ष्मीवेशसंप त्सुभारतीशोभयोरपि॥३०॥ शिखरंशैलवृक्षाग्रकक्षापुलककोटिषु॥पक्वदाडिमवीजाभमाणिक्यशकलेपिच॥३१॥ शुक्रंरेतोक्षिरुक्शुक्रोनाकाव्यज्येष्ठवन्हिषु॥गजभूषाचशृंगारःशुषिरंगर्तवाद्ययोः॥३२॥ कुटजेवासवेशक्रोवरीशच्योःशतावरी॥शक्करीमेखलाछंदःशवरःसलिलेशिवे॥३३॥ स्थिरामहीशालपर्ण्योःशंबरंसंयमेजले॥शंबरोदैत्यहरिणौशत्रंस्यात्केतनेवले॥३४॥स्रोतांजनेचसौवीरंकांजिकेवदरेपिच॥हलतिग्मकरौसीरौसांद्रंमृदौघनेवने॥३५॥ तंत्वाद्यग्रंथयोःसूत्रंकारणेपिचदृश्यते॥ इतिरांताः॥शैलेऽचलोऽचलाभूमावरालःसर्जवक्रयोः॥३६॥ अलिःसुराषुष्पलिहोःकल्लोलेप्याकुलंत्रिषु॥आलुर्गलंतिकायांस्त्रीक्लीबंमूलेचभेलके॥३७॥ आलिःसेतुःसखीपंक्तौशौंडिकस्त्री॥सुतीबलः॥आभीलंभीषणेकृच्छ्रेइलाभूवाग्बुधांगनाः॥३८॥ आर्द्रस्तूरण योरोलःकालःस्यान्मृत्युकृष्णयोः॥अंशेवृत्तावपिकलाकदलीध्वजरंभयोः॥३९॥कफोणिघातेज्वालेच

कीलावत्कीलदृष्यते॥शिरसोस्थ्निकपालोस्त्रीघटादेःशक
लेव्रजे॥४०॥काकोविषंचकाकोलोसाल्लायामपिकं बलः॥धू
नकेपिककरुकलःकामलःकामुकेमधौ॥४१॥कुलंगोत्रेगणेदे
हेननाज्ञानेचकेवलं॥कपिलाशिंशपाकौंत्योःकपिलोग्नौमुने
शुनि॥४२॥कोलोंकपालवुत्संगेवराहेभेलकेपिच॥पिप्पल्य
पिचकोलास्यात्कोलंचवदरीफले॥४३॥मृगेजलेचकमलं
कुवलेबदरोत्पले॥कल्लोलोशात्रवोल्लोलोपर्कट्यांचकमंडलुः
॥४४॥कर्मरंगतरौकर्मफलंदुःखेसुखेपिच॥करालोधूर्णतेले
पिदेशेकेशेचकुंतलः॥४५॥कौतूहलप्रशस्तेपिखलुश्चर्मणि
चातके॥वस्त्रेनिम्नेचाथखलंशस्यस्थानेशठेत्रिषु॥४६॥मंड
लेमणिकेगोलंगोलागोदावरीसखी॥गोपोभूपश्चगोपालोच
पलःपारदेपिच॥४७॥चपलापिप्पलीलक्ष्मीपुंश्चलीविद्युतः
स्मृताः॥छलंछद्मस्खलितयोर्जबालोपंकशैवले॥४८॥जं
गलोनिर्जनेदेशेत्रिलिंगःपिशितेस्त्रियां॥जालंदंभेपिजंबीरेदेव
भेदेपिजंभलः॥४९॥झल्लाः॥तपोर्मिर्दुहिता तलंमूलचपेटयो ॥
तालोगीतक्रियामानेहरितालेद्रुमांतरे॥५०॥लोद्रेहारमणौ
पुंसिपवाग्वातरलास्त्रियां॥ब्रह्मदारौपिचौतूलंतुलासादृ
श्यपयोस्तुला॥५१॥तमालोवरुणेखड्गेतापिच्छेतिलकेपिच॥
गुवाकेपिच तांबूलंविडंगेपिचतंडुलः॥५२॥दुकूलंश्लक्ष्णवस्त्रे
पिचार्थेपत्रेछदेदलं॥धवलागविनाशेढशुक्लसुंदरयोस्त्रिषु॥५३॥
परमाणौचपीलुःस्याद्देहेचात्मनिपुद्गलः॥शस्त्राकारेप्यथतरौपिप्प
लःपिप्पलंजले॥५४॥शाल्मलीशिंशपाचैवपोतिकाचापिपि
च्छिला॥सश्मश्रुयुवतीपालिःपंक्तिःकर्णलतापिच॥५५॥वीणा
दंडेप्रवालःस्त्रीविद्रुमेनवपल्लवे॥नलेकाशेपोटगलःपित्तयुक्ते
चपित्तलः॥५६॥पिंगलःस्यात्कणवद्याबाशुत्रीहिश्चपाटलः
॥फलंजातीफलेलाभेबाणाग्रफलकेपिच॥५७॥फेनिलंबदरे

शिशे बालो ह्रीबेरकेशयोः॥ बलिर्जराश्लथत्वेस्त्रीगृहदार्वेसुरौबलौ॥५८॥ बलंगंधरसेरूपेक्लीबेबाह्रपालकेस्त्रियां॥ बहुलःकृष्णपक्षेपिनेलानेदापिवार्दलः॥५९॥ दुर्दिनेप्यथवेलास्यात्तिंधोःकूलेचभोजने॥ ऋषिभेदेप्लवेपुंसिभेलंभीरुहृदित्रिषु॥६०॥ मेखला द्विनितंबेपिग्रहेनामंगलंशुभे॥ निकटेपिच मूलंस्याज्ज्मूलेपिचमातुलः॥६१॥ मौलिःकंकेलिवृक्षेपि मल्लःपात्रेकपालिनि॥ बलीयसिचमत्स्येचमंडलंपरिधौगणे॥६२॥ बिंबेदेशेनाच श्रुनि रसालस्त्विक्षुचूतयोः॥ जिह्वाकमलयोर्लौलाशालास्या ज्ञृहशाखयोः॥६३॥ तरुजातौमत्स्यभेदेशालोहालेनृपेपिच॥ निगडेपुंस्कटीवहूवस्त्रेचमृंखलंत्रिषु॥६४॥ शृगालिर्गंधमृगेधान्येशयालुःकुक्कुरेलसे॥ शकलंवल्कलेखंडेशीतलःशिशिरेनिले॥६५॥ षंडाली तैलमानंस्यात्सारसीस्त्रीचकामुकी॥ सिध्मलामुच्छमीनेस्त्रीत्रिलिंग्यांतुकिलासिनि॥६६॥ ऋज्जोर्वृक्षेच सरलःसालोवरणसर्जयोः॥ हस्तिमल्लोगजास्येचहेलावज्ञाविलसयोः॥६७॥ ॥इतिलांताः॥ यागेचमद्यसंधानेस्नानेचाभिषवःसुमान्॥ मृतावसत्त्वेचाभावःस्याद्द्रजःपुष्पमार्तवं॥६८॥ आश्रवोंगीकृतौवश्ये आहवौयागसंगरौ॥ उपप्लवोराहूत्पातौकितवौमत्तवंचकौ॥६९॥ खलीनेस्त्री कविःपुंसिकाव्यकृच्छुक्रसूरिषु॥ कैतवंतुच्छलेघूतेराजिकायांक्षुतिक्षवः॥७०॥ केशवःकेशवीन्विष्णुशालवोमुनिलोध्रयोः॥ जीवोस्त्रीजीवितेपुंसिगुरुजंतोःस्त्रियांगुणे॥७१॥ तत्वंविलंबितेनृत्येस्वरूपेपरमात्मनि॥ मेघेरात्तिसुरेदेवोद्विजिव्हौव्याडसूचकौ॥७२॥ ध्रुवोवटेस्मराशौचगीतिस्रुक्भेदयो ध्रुवा॥ धवोधूर्तप्रियनवोनूतनेवाससेस्तुतौ॥७३॥ प्लवोनिषादमर्कट्यांभेकेभेलेगतौकपौ पल्लवोविस्तरेषिंगेकिसलेविटपेवने॥७४॥ घटादौपार्थिवोराज्ञि वल्लवःसूदगोपयोः॥ गजेधन्विनिशुक्रेचपर्शुरामेचभार्गवः॥७५॥

दूर्वागौरीचभार्गव्योसत्तासंसारयोर्भवः॥भावोगौरवितेजंतौ
पदार्थेभिनयांतरे॥७६॥माधवोहरिवैशाखौराजीवोमृगमी
नयोः॥रौरवौघोरनरकौलवश्छेदनलेशयोः॥७७॥करजभिस्सु
लेलदुः वद्यपक्षिप्रभेदयोः॥विश्वंशुंठ्यासमस्तेचनिर्वाणेविभ
वोधने॥७८॥अश्वोघेवाडवनस्त्रीपातालेनाद्विजौर्वयोः॥वडवा
ऽश्वाकुंभदास्योर्योगेकीलेहरेशिवः॥७९॥स्करवंसेमंशिवंश्यामा
॥मलकीचाभयाशिवा॥पाडवस्करसेरागेसैंधवोलवणाश्व
योः॥८०॥स्वोस्त्रियांज्ञातिधनयोःस्वमात्मनिनपुंसकं॥आधेय
धारणेसत्वेमेलकेपिचसंभवः॥८१॥इतिवांताः॥अपभ्रंशो
दुष्यतनेभाषाभेदापशब्दयोः॥टीकादर्पणावादर्शावाशातृष्णा
दिशोस्त्रियां॥८२॥प्रभुशंकरयोरीशःस्त्रियांलांगलदंडके॥दि
गबरेकपौकीशःकेशोवालप्रचेतसोः॥८३॥जीवितेशोयमेना
थेदंशःसंदनेपिच॥सर्पक्षतेथज्ञानेचलोचनेदर्शनेचदृक्॥
॥८४॥नाशःपलायनेमृत्योनिस्त्रिंशोखड्गनिर्दयो॥निशारा
त्रिर्हरिद्राचमृगादौप्रथमेपशु॥८५॥पुरोडाशोहविर्भेदेचम
स्यापिष्टकस्यच॥रसेसोमलतायाश्चहुतशेषेचकीर्त्यते॥८६॥
पाशःकचार्थेसंघार्थःकर्णांतेशोभनार्थकः॥छत्राद्यंतेचनिंदा
र्थेपाशःपश्वादिबंधने॥८७॥वार्ताहरेपुरोगेचसहायेचप्रति
स्पशः॥लोमशोमेढ्रकेपिस्याद्विवशोवशविव्हलौ॥८८॥वंशो
वर्गेचपृष्ठांशेवेशोवेश्यागृहेपिच॥आयत्ततप्रभुत्वेछ्वशःपर
वशेत्रिषु॥८९॥दानेरोगेपिचस्पर्शःसदृशतूवितेसमे॥इति
शांताः॥आष्ट्रूसुस्थ्येंवरीषंनाकिशोरदृशिंभुषु॥९०॥अभिला
षे·नुतर्षःस्यात्पानेछाचाप्यथ्थामिषं॥सभोगोत्कोचमांसेषु
पाषाणात्मजानिशा॥९१॥भल्लूकेशोणकेचर्क्षोनक्षत्रेपुंनपुंसकं॥
ऋषिर्वेदेपिकक्षस्तुदोर्मूलेशुष्ककानने॥९२॥कक्षावरत्राप्रकोष्ठ
स्पर्हेद्रूहणिकासुच॥कुल्माषकांजिकेनातुयवकेस्यादथ्यानिले॥९३

पापेच कलुषं घोषः शब्दाभीरनिवासयोः॥ शुचौ दक्षे च नोक्षस्त्या तर्षौलिप्सापिपासयोः॥ ९४॥ दक्षः प्रजापतौ ताम्रचूडे द्रुरवृषेपतौ॥ पौरुषं मानभेदे च पुन्नागे पुरुषो नरे॥ ९५॥ पक्षौ मासार्धपार्श्वौ च महिषी राजपत्न्यपि॥ मूर्खे मानेफले माषो मेषो राश्यंतरे रणी॥ ९६॥ संख्यायां तु ननालक्षं क्लीबं व्याजशरव्ययोः॥ द्रुरतास्त्र्यौ विशालाक्षौ शेषोनानंतसीरिणोः॥ ९७॥ उपयुक्तेतरे त्वस्त्री शैलूषो नटबिल्वयोः॥ शुश्रूषापरिचर्या च महर्षः स्पर्धने मुदि॥ ९८ ॥ इति षांताः॥ सोन्यायामंतिके भ्यासोऽधिवासौ स्थानसंस्क्रिये॥ आख्यायिकापरिच्छेदे चाश्वासो निर्वृतावपि॥ ९९॥ उदर्चिरुत्तमे वन्हावेनः पापापराधयोः॥ कनीयाननुजे ऽल्पे च कंसो माने ऽसुरांतरे॥ ५००॥ तेजसे लस्यपात्रे च कुत्सः स्तवकल्हारयोः॥ छंदः पद्यश्रुतीच्छासु तरो वेगे वलेपि च॥ १॥ तमः शोकेप्यथ हिमतौ नाधर्मे व्रते तपः॥ पक्षे स्वर्णे तामरसं निशा दुर्गा च तामसी॥ २॥ मणिदोषे दरे त्रासो दासी चित्ताथ चेटयोः॥ झिंट्यां च दासी दीर्घायुर्नैषिः काकस्य शाल्मलिः॥ ३॥ योक्त्रे च वक्रशराख्याने स्वांते सरसि मानसं॥ माश्यं द्रुमासयोः पुंसि खर्जूरे स्याेर्महारसः॥ ४॥ राजहंसो नृपाग्रे च जिव्हा भूः शल्लकी रसा॥ जले शरीरधातौ च पारदस्वाद्ययो रसः॥ ५॥ भाषा शृंखलके रासः क्रीडायामपि गोदुहां॥ रहो रते च गुह्ये च रभसो हर्षवेगयोः॥ ६॥ विहायाः शकुने पुंसि विहायः खेनपुंसकं॥ पुत्रादौ तर्णके वर्षे वत्सः क्लीबं तु वक्षसि॥ ७॥ रसेक्रूरे च विकृतौ बीभत्सस्त्रिषु नार्जुने॥ व्यासो मुनौ च विस्तारे बर्हिर्नौ कुशशुष्मणोः॥ ८॥ अग्रे प्रधाने च शिरः श्रीवासो विष्णुधूपयोः॥ सुमनाः पुष्पमालत्योः स्त्रियां ना देवधीरयोः॥ ९॥ वीणाभेदे सर्जरसो धूपकेप्यथ सारसं॥ पद्मे ना पक्षिणींदौ च सरो नीरतडागयोः॥ १०॥ हविः सर्पिषि हव्ये च हंसस्तु खगसूर्ययोः॥ निर्लोभे नृपतौ विष्णावंतरात्मनि च ष्यते॥ ११ इति सांताः॥ अवग्रहः स्यात्प्रकृतिभाववृष्टिविबंधयोः॥ १९

अवरोहोवतरणेत्रिदिवेचलतोद्गमे॥१२॥ आरोहस्तुनितंबे
स्यादीर्घत्वेचसमुच्छ्रये॥ग्राहोस्त्रेहेचायहः स्यादीहातूद्यमवां
छयो॥१३॥सूपेचपाकपात्रेचकटाहोमहिषीशिशौ॥खड्गकोपे
चकलहोदासूहश्वातकेपिच॥१४॥समारंभेपिपटहोब्रह्मण्य
पिपितामहः॥प्रवाहोव्यवहारेचबहुर्विपुलसंख्ययो॥१५॥ व
राहःसूकरेमेषेमुस्तकेप्यथमूर्छने॥अविद्यायांचमोहःस्याद्व
षस्कंधेनिरेवहः॥१६॥देहनिर्माणसैन्येषुव्यूहःस्यादथविग्रह
॥संग्रामेप्रविभागेचदेहविस्तारयोरपि॥वैदेहीपिप्पलीसीताव
णिक्स्त्रीरोचनास्वपि॥संक्षेपेपिसंग्रहःस्यात्सिंह्योवार्ताकुः
वासको॥१८॥राशिभेदहरौसिंहःश्रेष्ठार्थेचोत्तरेस्थित॥स्नेहदे
घृततैलादौस्यात्स्नेहोऽव्ययाःपरे॥१९॥इतिहान्ताः॥अथा
व्ययाः परेवाच्यानञभावेनिगद्यते॥तद्भिन्नेतदन्येचनिषेधेपि
चदृश्यते॥२०॥सादृश्येचेषदर्थेचह्रिरुग्मध्यविलासयो॥पुनर
र्थेगमोर्थेचसुष्ठु त्वर्थप्रशंसयो॥२१॥चपादपूरणेपक्षांतरेहे
तौविनिश्चये॥हाविस्मयेप्रमोदेचओमेवंप्रणवार्थयो॥२२॥
युक्तार्थेसाधनार्थेचसांप्रततद्विदोविदुः॥ह्रुंवितर्केचानुमतौवा
र्तायामस्त्वोकिल॥२३॥प्रातर्दिनेचपूर्वत्रेत्यर्थेपूर्वेद्युरिष्यते॥
॥इतिनानार्थवर्गः॥ आनंदेस्तःशुभंदिष्ट्याकटवेकटचाद्भुते
॥भूर्भुवःस्वस्त्रिभुवनमनागर्थेदरंस्मृतं॥२४॥आमंदमभ्युप
गमेनवरंकेवलार्थकम्॥प्रातरर्थेनपयतिक्षणमात्रेक्षणस्प
णे॥२५॥स्वेमपुण्येस्वस्तिनास्यादुच्चैरर्थेदृकीर्तितम्॥वारंवार
स्रुवदर्थेवारंवारेणचेष्यते॥२६॥ उताहोपदिवायद्वाकिंवानेति

---

अथाव्ययानिश्रीणद्यानंदार्थस्यद्वेअद्भुतार्थस्यत्रिभुवनस्यैकंईषदर्थस्यै
कं॥२४॥अभ्युपगमार्थस्यैकंकेवलार्थस्यैकंप्रातरर्थस्यैकंक्षणमात्र
स्यैकं॥२५॥हेपुण्यार्थस्यद्वेउच्चैरर्थस्यद्वेशश्वदर्थस्य॥२६॥ षट्विक

समाड्मे॥ किंत्वर्थेपि तु यद्यर्थे सचेत्त्रोक्तादिवाचकं॥२७॥ अस्ति कालसामान्येतिङंतप्रतिरूपकं॥ सज्जः सहार्थे नेस्यान्निषेधे यदिशेषगीः॥२८॥ विभाषाऽन्यतरस्यां वाविकल्पार्थाः प्रकीर्तिताः॥ तेइतिस्यात्वयेस्यर्थेमयेस्यर्थेचमेइति॥२९॥ ॥इत्यव्ययवर्गः॥ ॥लिंगादिसंग्रहेऽनुक्तममरेणाभिदध्महे॥ स्त्रियामाजिर्दरज्जालिपुरुक्षाषाः समाः शरत्॥३०॥ सिकताया बहुत्वेपि विंशत्याद्येकवाग्यपि॥ पुंस्त्वेहाहा हुहूर्ग्रंथिः पाणिः कलिरीतिमौलिः॥३१॥ अंजलिरंध्रिःकुक्षिर्मौरकलोकोत्तरासंगाः॥ यवकवातसंकेतपोतकर्तगरुच्छदाः॥३२॥ श्लेष्मोष्मपापयक्ष्मास्याद्मोनोवानायनस्तनः॥ फेनाभिजनकलापनिकाल्पाहारोद्गारोपलकल्लोलाः॥३३॥ फालचषालकीतंदुलशैवलखलविभवप्रसवाः॥ आनाऽपजननाडीभ्योयुगमेगंपदव्रणं॥३४॥ आनंदेदुंदुभिरथबहुत्वेप्यसवोग्रहाः॥ सक्तवोवल्लजालाजादाराः प्राणादशाइति॥३५॥ क्लीबेकलत्रविषबीजकटस्वरत्वतल्पोत्तकुंकुमप्रवीडतृणाक्षराणि॥ शृंगाटपीठगुदभेषजशृष्किण्वदेवाश्रुभाश्रुचिबुकोडुपसादसानि॥३६॥ यकृत्कुहकलिध्मानितीरंकालश्वजानु च॥ धर्मार्धसारमित्राण्यंगदनन्यायबंधुषु॥३७॥ पुंनपुंसकयोर्दारुजीवातुस्थाणुसीधवः॥ स्याद्वास्तहिंगुतितउसानुकंबुकमंडलु॥३८॥ गोमयकुमुदबिंबकुबिबशंखाश्रमसृणसुवर्णतोरणाः॥ नूपुरशिखरतूर्णशृगांकुशबर्हिपल्लवाः॥३९॥ व्रतदिनमासवर्षादलवल्ककोटरखंडवासवाः॥ चंदनपद्मधर्मकोलाहलकिसलयदेहदोहदाः

---

त्यार्थस्यद्वेकिंत्वर्थस्यद्वेयद्यर्थस्य॥२७॥ कालसामान्यस्यैकं सहार्थस्यैकं निषेधार्थस्यैकं॥२८॥ त्रीणिविकल्पार्थस्य त्वयेस्यर्थस्यैकंमयेस्यर्थस्यैकम्॥२९॥

कुलिशध्वजकार्षापणनिधानमुस्ताककोरुशृंगवल्कपाः ॥ ४०
लप्रवालचषकौ पवासकासारकटकसंतानाः ॥ ४१ ॥ आकाशकुं
जकुतपौदनवारबाणपुस्तावतंसनखमंडपकल्कपुच्छाः ॥ कौत
रकंकणतडागकिरीटराष्ट्रतीर्थव्रणास्तवकसेकमपीठकानि
॥ ४२ ॥ समरसरकरणविटपागनागैरिकदैवतकुटागाराः ॥ प्रो
थमुहूर्त्तदिवसफलानिमासनिदाघमुसलतिलकानि ॥ ४३ ॥
वल्मीकबाल्हीकवृषणद्रोणगांडीवनिगडानिच ॥ मुकुलादिव
विज्ञेयंशिष्टसंस्मृतोपरं ॥ ४४ ॥ अथस्त्रीनपुंसकयोः केलिर्म
णिर्योनिर्मसिर्मुनिः ॥ मरीचिशाल्मलिः स्वातिःश्रेणिर्मुष्टिस्तिथिः
सृणिः ॥ ४५ ॥ ऊर्मिर्गभस्तिरशनिर्वैपार्ष्णीसुधिराशयः ॥ वस्तिश्च
किष्कुः केदुश्चवेश्वतन्निबवादव ॥ ४६ ॥ गंडूषगजेजागरभुज
कीलज्वालवतेकक्रीडाः ॥ उत्कठसटवराटकरभसाः स्त्रीत्वेउ
टावेताः ॥ ४७ ॥ शल्लकोवृश्चिकः कीटःशारस्तूणा घटःकरः ॥ शं
फरोवेतसश्चामीस्त्रियांडूताःप्रकीर्तिताः ॥ ४८ ॥ स्त्रीक्लीबयो
रुडुर्दमाच्छर्दिर्ज्योतिःसरोर्चिषः ॥ सुखलसंवणिज्यंचबडिशक्रो
डपाटलं ॥ तारकरसननीतमेतेटाबंतकाः स्त्रियाम् ॥ कुलास्तु
नगरीस्थानस्थलानिपुरपाटलं ॥ ५० ॥ त्रिलिंग्यांतुप्रतिसरः
स्फुलिंगनखरार्गलाः ॥ कंदरंशृंखलंनालंवल्लूरफलमुस्तकाः
॥ ५१ ॥ जभश्चटाबंताएतेस्त्रियामथबिभीतकः ॥ हरीतकाटंक
तटंकवाटाश्चगुणेवटः ॥ ५२ ॥ मंडलंशलभंभल्लावकंकलशकंदलौ
॥ मृणालामलकौदाडिमश्च डबंताःस्त्रियामिमे ॥ करणेल्युट्त्रिपु
यस्मात्स्यव्याख्यानमित्यदः ॥ सूत्रकृद्भाष्यकृशावनुमानइतीछ
ति ॥ ५४ ॥ ॥ इतिलिंगादिसंग्रहवर्गः ॥ ॥ दृष्टप्रयोगायेशब्दाः
प्रायस्तइहकीर्तिताः ॥ अप्रयुक्तास्तुपाणिन्यादिषुदृष्टाप्युपेक्षि
ताः ॥ ५५ ॥ इतितृतीयकाण्डःसमाप्तः ॥ इतिश्रीपुरुषोत्तमदेवरचित
स्त्रिकाण्डशेषाभिधानकोशःसमाप्तः ॥ ७ ॥ ७ ॥ ७ ॥

श्रीगणेशायनमः॥ शुद्धवर्णमनेकार्थशब्दमौक्तिकमुत्तमम्॥ कं
ठेकुर्वंतुविद्वांसःश्रद्दधानादिवानिशं॥१॥शब्दाम्भोधिर्यतोनंतो
कुतोव्याख्याप्रवर्तते॥स्वानुबोधैकमानायतस्मैवागात्मनेनमः
॥२॥सरस्वत्याप्रसादेनकविर्बध्नातियत्पदम्॥प्रसिद्धमप्रसिद्धं
वातत्प्रमाणंचसाधुच॥३॥शिवःशर्वःशिवःशुल्कःशिवःकीलः
शिवःपशुः॥शिवागौरीशिवाक्रोष्ट्रीशिवंश्रेयःशिवाभया॥४॥
गौरीशिवप्रियाप्रोक्तागौरीगोरोचनामता॥गौरीस्यादप्रसूता
स्त्रीगौरीशुद्धोभयान्वया॥५॥हरिरिंद्रोहरिर्भानुर्हरिर्विष्णुर्हरि
र्मरुत॥हरिःसिंहोहरिर्भेकोहरिर्वाजीहरिःकपिः॥६॥हरिरंशु
र्हरिर्भीरुर्हरिःसोमोहरिर्यमः॥हरिःशुक्रोहरिःसर्प्पःस्वर्णव
र्णोहरिःस्मृतः॥७॥दिग्दृष्टिदीधीतिस्वर्गावज्रवाग्बाणवारिषु॥
भूमौपशौचगोशब्दोविद्वद्भिर्दशसुस्मृतः॥८॥मधुमद्यंमधुक्षौ
द्रंमधुपुष्परसंविदुः॥मधुर्दैत्योमधुश्चैत्रोमधूकोपिमधुर्मतः९
क्षुद्रावेश्यानटीक्षुद्राक्षुद्रास्यान्मधुमक्षिका॥असद्विष्णुर्नरःक्षु
द्रःक्षुद्रास्यात्कंटकारिका॥१०॥वाहोयुग्मंघनेवाहःप्रवाहो
वाहउच्यते॥वाहोमायाविशेषश्चवाहोवाहुरितिस्मृतम्॥११
दृष्टकादिचयोहारोहारोमुक्तागणःस्मृतः॥हारोमणिविशेषश्च
हारोरजतउच्यते॥१२॥आत्माभावोमनोभावोभावःसत्ताभवो
पिच॥भावःपूज्यात्मकोलोको पदार्थोभावउच्यते॥१३॥कुथ्या
कन्यासमाख्याताकुथःस्यात्करिकम्बलः॥कुथःकुशःकुथः
कीटःप्रातश्नायीद्विजःकुथः॥१४॥कुशोकालेतिलेच्छागेकम्बले
सलिलेम्बरे॥दौहित्रेखड्गपात्रेग्रौकुतुपाख्याप्रवर्तते॥१५॥वाणी
वाचिपशौभूमौदिशिरश्मौजलेक्षिणि॥स्वर्गेमातरिवज्रेग्नौसु
खेसत्येचगोध्वनिः॥१६॥स्वर्गेभेसेचवक्त्रेचवलीवर्देचगोःसमा
न॥स्त्रिंशंनयनदिग्भागमातृवाग्भूजलेषुच॥१७॥श्रीर्णापशसिसो
भाग्येयोनौकांतौमहिम्निच॥सूर्येसंज्ञाविशेषेचशशांकेचभगश्रुतिः१८

पर्य्यन्ते राज्ञि गीर्वाणेप्य वहृत्तरि भर्तरि । मूर्खे वालेजिगीषौ च दे
वोक्तिर्न रिकुरिनी ॥ १९ ॥ मूर्द्धि वित्ते जले काये सुखे ब्रह्मणि मारुते ॥
कामे काले सुवर्णे च कशब्दो द्रविणे ध्वनौ ॥ २० ॥ नूर्य्यास्ये श्री फले
पद्मे कुञ्जराग्र करेऽदिवि ॥ ह्रीपे तीर्थे निमित्ते च विशिष्टे पुष्कर ध्वनिः
॥ २१ ॥ रसो जल रसो हर्षो रसः शृङ्गारपूर्वकः ॥ रसः सालद्रुनिर्यासः
पारदोपि रसो विषं ॥ २२ ॥ क्षीरे पुष्परसे तोये मद्ये मण्डे घृते स्रजि
संमस्वर्थेषु कीलालप्रवदन्ति मनीषिणः ॥ २३ ॥ तिलपिष्टे मले मांसे
जम्वाले कोमले श्मनि ॥ शवे क्षीरे वले प्राज्ञाः पल्लं परिचक्षते ॥ २४
जैवराज्ञि विधो धर्म्मे तपस्विनि तुरंगमे ॥ शीते पक्षिविशेषे च हंस
शब्दो हरेपि च ॥ २५ ॥ हस्त पुच्छ ध्वजे षण्डे शैले सुसि गुणाधिके ॥ विषे
धामनि भूपालेलामेति बुधैर्मतं ॥ २६ ॥ वसुस्सूर्यो वसुर्देवो वसुर्व
न्हिर्वसुर्मही ॥ वसु रत्नं वसु द्रव्यं वसवोष्टौ ध्रुवादयः ॥ २७ ॥ अक्ष
राणि स्मृता वर्णा वर्णाश्चेता द्र्योगुणाः ॥ वर्णौ वाद्यगुणो गाथा वर्णो
गेयाहिजादयः ॥ २८ ॥ वर्णौ गुणाक्षर जसः शुक्लादि ब्राह्मणादिषु ॥ व
र्णस्तु तो कथायां च वर्णः स्याद्रूपभेदयोः ॥ २९ ॥ शुक्लो वर्णोर्ज्जुनो
नाम पांडवोप्यर्जुनो मतः ॥ अर्ज्जुनस्तृणजातिस्यादर्ज्जुनः ककुभो
द्रुमः ॥ ३० ॥ वलिस्त्रिमध्यभागो र्मिर्वलिर्वर्ष्मजराकृति ॥ वलि पूजो
पहारः स्याद्वलिर्दानवसत्तमः ॥ ३१ ॥ व्रणस्यावरणे पट्टः पट्टो भूर्मादि
ताक्षरम् ॥ वीरदीक्षा स्मृतः पट्टः पट्टः स्यादपि चासनम् ॥ ३२ ॥ रध्रे व
स्त्रे विनामध्ये न्यवधाने न्तरात्मनि ॥ वहिर्योगे वकाशे च विशेषे व
सरेन्तरम् ॥ ३३ ॥ अरिष्टं गृहमित्युक्तमरिष्टो वृषभासुरः ॥ काकनि
म्बावरिष्टे च अरिष्टं क्षेममीरितं ॥ ३४ ॥ मंडलं भूमिभागश्च मंडलं श
स्मासुतः ॥ मंडलं वर्तुलं प्रोक्तं संघातो मंडलं मतं ॥ ३५ ॥ इन्द्रियं कंव
लं प्रोक्तं कम्वलो रोमजः पटः ॥ कम्वलं तु गवां सास्ना कंवलं कंवलं
विदु ॥ ३६ ॥ कुन्तले देशपर्यायः कुंतलः केशवाचकः ॥ कुंतलः सूत्रधार
श्च कुन्तहस्तोपि कुंतलः ॥ ३७ ॥ मणिर्लिंगाग्रिमो भागो मणिः प्रोक्तो भग

ध्वजः॥मणिः कूपमुखंज्ञेयं पद्मरागादिकोमणिः॥३८॥ तंत्रंशा
स्त्रंकुलेतंत्रं तंत्रंसिद्धौषधीक्रिया॥तंत्रंसुखंबलेतन्त्रे नन्त्रंप
वनसाधनं॥३९॥नेत्रंवस्त्रविशेषश्चनेत्रंचक्षुरुदाहृतं॥परिवर्ते
गुणोनेत्रोनेत्रःकस्तूरिकामृगः॥४०॥वातादिप्रकृतिर्धातुर्धातुर्दे
हरसादिकम्॥क्रियाभावःस्मृतोधातुर्धातुःशैलोपलोद्भवः॥४१॥
सुधाप्रासादभागद्रव्यंसुधाविद्युत्क्षयामृतम्॥सुधैकंभोजनंज्ञेयंसु
धाधात्रीसुधास्नुही॥४२॥कांडोवाणस्तुलाकाण्डःकाण्डःसंघात
दृश्यते॥कांडःकालोवलेकांडंकांडंमूलेतरोरपि॥४३॥वेलाकाल
विशेषःस्याद्वेलासिंधुजलोद्धतिः॥वेलासेवाङ्गुलीच्छेदेवेलाद्रोण्य
न्तरेध्वनिः॥४४॥उत्सवेचप्रकोष्ठेचमुहूर्त्तेनियमेतथा॥कालश
ब्दोव्यवस्थायांसमयेपिनिगद्यते॥४५॥भ्रूणोभीरुर्द्विजोभ्रूणोभ्रू
णोगर्भाशयःस्त्रियाः॥भ्रूणोऽजःशिशुर्भ्रूणोभ्रूणोविकलउच्य
ते॥४६॥अहिर्दैत्यविशेषःस्यात्सूर्य्योप्यहिरहिर्ध्वजः॥भुजङ्गोऽहिः
समाख्यातःसिंहिकासूनुरप्यहिः॥४७॥व्यालोहिःस्वापदोव्या
लोव्यालःस्यात्कुटिलःकरी॥प्रमादवान्नरोव्यालोव्यालोवालउ
दाहृतः॥४८॥शब्दादिविषयाःपंचप्रसिद्धाइन्द्रसंज्ञया॥श्रेष्ठइन्द्रः
समाख्यातोदेवराट्इन्द्रउच्यते॥४९॥पयस्विन्यर्जुनिधेनुर्धेनुः
कुंजरकामिनी॥असिपुत्रोमताधेनुर्धेनुर्वृत्तिःशिवंकरी॥५०॥
धर्मोवृषोवृषःश्रेष्ठोवृषोगौर्महिषोवृषः॥वृषोवलंवृषःकामोवृष
णोवृषउच्यते॥५१॥योगोयुक्तिविशेषःस्यात्संयोगोयोगउच्यते॥
योगश्चागामिकोलाभःसमाधिर्योगइष्यते॥५२॥शलिर्मुखःश
लिर्गर्भःशलिर्भृङ्गःशलिर्गदः॥शलिःसर्पविशेषश्चशलिःकलिरु
दाहृतः॥५३॥सीतालक्ष्मीरुमासीतासीतासस्याधिदेवता॥सीता
शीरध्वजापत्यंसीतामन्दाकिनीमता॥५४॥सीताचालकनंदाच
चक्षुर्भद्राप्लुताःक्रमात्॥प्रयागादीनांप्रवाहानांगयानामप्रकी
र्तितम्॥५५॥आदिष्टश्चिपोनाभिर्नाभिश्चक्रस्यपिण्डिका॥

कुटुंबस्याग्रणीनाभिर्नाभिर्नाभिर्द्वीदरीतथा॥५६॥ गोत्रंनामान्व
येगोत्रोगोत्रश्चधरणीधरः॥ गोत्रावसुंधराज्ञेयागोत्रंचश्रवरं
स्मृतम्॥५७॥ शुक्रंदेहवतांबीजंशुक्रमग्निस्जंविदुः॥ ज्येष्टमा
सस्मृतःशुक्रःशुक्रोदैत्यपुरोहितः॥५८॥ घनोमेघोघनसान्द्रंकां
स्यतालादिकंघनं॥ घनंसंघोपनन्नित्यंघनःस्याल्लोहमुद्गलः॥५९
रामास्त्रीजामदग्न्यश्चरामोरामोशितासितौ॥ रामःपशुविशेषश्च
रामोदशरथात्मजः॥६०॥ द्रोणस्यात्कौरवाचार्योद्रोणःकाकइतीरि
तः॥ द्रोणोगिरिविशेषश्चद्रोणःस्याच्चतुराढकः॥६१॥ द्रोणीद्रोणाढ
कंप्रस्थात्कुडवश्चपलंविदुः॥६२॥ शाणकोमाषकश्चैवयथापूर्वंच
तुर्गुणाः॥ वीतरागोजिनःप्रोक्तोजिनोनारायणस्मृतः॥६३॥ कन्द
र्पोपिजिनश्चैवजिनःसामान्यकेवली॥६४॥ जयंतीनगरीप्रोक्ता
जयंतीचध्वजानुजाः॥ जयंत्योषधिभेदस्याज्जयंतीशक्रसंभवा॥६५
रोहितंशक्रकोदण्डोरोहितोमत्स्यपुङ्गवः॥ रोहितोलोहितोवर्णोमृ
गराजस्तुरोहितः॥६६॥ धातकीप्रोच्यतेधात्रीधात्रीचामलकी
तथा॥ धात्रीवसुंधराज्ञेयाधात्रीस्यात्स्तनदायिनी॥६७॥ वीणा
दण्डःप्रवालस्यात्प्रवालःपल्लवःस्मृतः॥ प्रवालोविद्रुमःप्रोक्तःप्र
वालःसवत्सोगजः॥६८॥ तालःकालक्रियामानंतालःपातालु॥
मिष्यते॥ वृक्षभेदःस्मृतस्तालस्तालःकरतलध्वनिः॥६९॥ का
ष्ठानिशाकरूपकाष्ठाकाष्ठाप्रोक्तावसुंधरा॥ काष्ठाकालविशेषःस्या
त्काष्ठंदारुनिगद्यते॥७०॥ वृक्षपत्रंपलाशःस्यात्पलाशोराक्षसः
स्मृतः॥ पलाशोहरिणोवर्णपलाशःपाशउच्यते॥७१॥ सत्रंगृह
धनंसत्रंसत्रंसच्चरितंमतम्॥ सत्रंनामायुधंप्रोक्तंसत्रंदानंसमी
रितं॥७२॥ कलासकुशलःकल्पःकल्पोद्वैयोनिरामयः॥ कल्पः
कालविशेषश्चकल्पमग्र्यंचकीर्तितं॥७३॥ विष्टरोवर्द्धिपोमुष्टिर्वि
ष्टरोज्ञेयमासनम्॥ विष्टरोद्रुमविशेषश्चविष्टरःक्रतुरेवच॥७४
साभासमितिरित्युक्तासमितिःसंयुगावनी॥ समितिःसमयोक्तो

पः संग्रामसमितिर्मतः ॥ ७५ ॥ शितो वृषः शितः शुक्लः शितरजतमु
च्यते ॥ शापकोपि शितो ज्ञेयः शितो दैत्यपुरोहितः ॥ ७६ ॥ चित्रकं
तिलकं प्रोक्तं चित्रकः स्यात्पदो मतः ॥ चित्रको मूर्खराजिश्च चित्रकोप्य
न्तरोगरः ॥ ७७ ॥ बलो हली बलं सैन्यं बलं सत्वं बलौषधी ॥ रत्नज्यो
तिर्बलो दैत्यो बला लक्ष्मीर्बला मही ॥ ७८ ॥ परिग्रहो द्विजग्राहः सै
न्ये पृष्ठे परिग्रहः परिग्रहोनुबंधः स्यात्सतक्रा स्त्री परिग्रहः ॥ ७९ ॥ कुमा
त्रकः कदम्बः स्यात्कदम्बः सर्षपः स्मृतः ॥ कदम्बो वृक्षभेदश्च कदंबे
निर्गुणः पुमान् ॥ ८० ॥ प्रियको बीजसारश्च प्रियको हीपि चित्रको ॥
प्रियकः प्रियकोपि स्यात्प्रियको मुक्तिको व्रती ॥ ८१ ॥ अक्षो विभी
तको वृक्षः पाशकोक्षोक्षमिन्द्रियम् ॥ अक्षो रायणिरुक्तः कल्प
मक्षन्तु निम्नगम् ॥ ८२ ॥ चक्रः पक्षिविशेषश्च रथाङ्गं चक्रमायुधं ॥
चक्रं राज्यं च संघं च चक्रं व्यावर्तनं मतम् ॥ ८३ ॥ सत्यसंधः खरो ज्ञे
यः खरोपि पुरुषो मतः ॥ खरो रासभ उक्तो व्यवहारे खरस्तु ॥ ८४
ऋषिर्गोत्रविशेषः स्यादृषिः कालः ऋषिः कपिः ॥ ऋषिराढक इत्युक्त
ऋषिर्वैखानसो मुनिः ॥ ८५ ॥ अपत्ये च पृथिव्यादौ कालेतीते च राक्षसे ॥
प्राप्ते प्राणिनि कीनाशे भूतशब्दो निगद्यते ॥ ८६ ॥ शरभोष्टापदो ज्ञे
यः स्वर्णमष्टापदं स्मृतम् ॥ अष्टापदं शारिफलं कृमिजातिरुदा
हृतः ॥ ८७ ॥ बालः केशे जलं बालं बालं काशतृणं स्मृतम् ॥ बा
लो मूर्खः शिशुर्बालो बालो वेम उदाहृतः ॥ ८८ ॥ बालकः खेचरो
व्याघ्रो बालकः पृथुकः स्मृतः ॥ बालकं गंधद्रव्यं च जटाजूट
श्च बालकम् ॥ ८९ ॥ जातिः स्यात्सहजाख्यानं मालती जातिरुच्य
ते ॥ गोत्रादिजन्मजातिः स्याज्जातिर्वल्लीति कथ्यते ॥ ९० ॥ गोवि
षाणे फणा ज्ञेया भुजङ्गमशिरः फणा ॥ फणा जटा फणा कृष्णा फ
णा मंथानकुण्डली ॥ ९१ ॥ तिलको वृक्षभेदश्च तिलकं चित्रकं वि
दुः ॥ तिलकं लोमसंज्ञा स्यात्प्रधानं तिलकं मतम् ॥ ९२ ॥ गंध
र्वो देवजातिः स्याद्गंधर्वो हि तुरंगमः ॥ गंधर्वश्च स्मृतो गानो गन्ध

चीमृगपुंगवः॥९३॥ शृङ्गं प्रधानमित्युक्तं शृंगश्च शिखरं विदुः॥ शृंगं विषाणमित्याहुः शब्दकोशविचक्षणा॥९४॥ कांतारकाननं प्रोक्तं कांतारः पाकशासनः॥ इक्षुभेदश्च कांतारः कांतारो दुर्भरो दरः॥९५॥ करणं कारणं विद्यात्तत्रे करणमिष्यते॥ करणो जातिभेदः स्यात्करणानीन्द्रियाणि च॥९६॥ स्यामा रात्रिर्द्रिषत्स्यामा स्यामा स्त्री मुग्धयौवना॥ स्यामा प्रियंगुराख्याता स्यामा स्याद्दूदारिका॥९७॥ सारंगश्चातकः ख्यातः सारंगः कुंजरो मतः॥ सारंगो भ्रमरो ज्ञेयः सारंगो हरिणो मतः॥९८॥ सारंगः पातको ज्ञेयः सारंगो वैष्णवं धनुः॥ सारंगः पर्वतश्चापि सारंगो दीप उच्यते॥९९॥ शुभा सुधा शुभा सत्या स्नुही क्षीरशुभा मता॥ शुभश्रेयः शुभा शोभा शुभाख्याता हरीतकी॥१००॥ गुरुः पिता गुरुर्ज्येष्ठो गुरुः सुरपुरोहितः॥ दुर्भरोपि गुरुः प्रोक्तो गुरुः शिष्याभिषेचकः॥१॥ बाल्हीकं हिंगुराख्यातं बाल्हीकं कुंकुमं मतम्॥ बाल्हीकं स्याज्जनपदो बाल्हीकाश्चाश्वजातयः॥२॥ खर्जूरः फलभेदः स्यात्खर्जूरं रजतं मतम्॥ खर्जूरः क्षुद्रजातिः स्यात्खर्जूरो ग्रहणाधिपः॥१०३॥ पुण्डरीकः स्मृतो व्याघ्रः पुण्डरीकः कमण्डलुः॥ पुण्डरीकः सितो वर्णः पुण्डरीकं सरोरुहम्॥४॥ इति श्रीकाश्मीराम्नाये महाक्षपणकविरचितेनेकार्थध्वनिमञ्जर्यां श्लोकाधिकारः समाप्तः॥ अर्द्धार्द्धे शेषशयायां तल्पशब्दो विधीयते॥ दारास्वग्नौ गृहे स्थाने धिष्ण्यमाहुर्मनिषिणः॥५॥ तटो वप्रः पिता वप्रो वप्रः केदार इत्यपि॥ व्यालः सर्प्पो विषेव्यालो व्यालो दुष्टश्च तु पथः॥६॥ मोचा शाल्मलिराख्याता मोचा तु कदली मता॥ कक्षा तु भवनान्तर्भूमेरवला गजरज्जुषु॥७॥ संक्षेपे भक्तसिक्थे च तुच्छधाने पुलाकवाक्॥ पक्षे गुरुतिमासार्द्धे पक्षशब्दो निगद्यते॥८॥ मास्याषाढे विशुद्धेग्नौ शुक्के तु पद्दते शुचिः॥ शक्रेपि वर्षुके मेघे मत्तनागे घनाघनः॥९॥ अभिख्यैति समाख्याता कीर्तौ कांतौ च नामनि॥ रम्भा देवाङ्गना प्रोक्ता रंभा

लुकदलीमता॥१०॥वृक्षभेदेकरीरस्यात् घटवंशांकुरेपिच॥देदे
दारेषुकेदारेक्षेत्रंवृक्षोचकीर्त्यते॥११॥निर्व्यूहोनिर्गतापीडानि
र्यासद्वारभूमिषु॥अविशब्दोरवौमेषपर्वतेपिनिगद्यते॥१२॥मृ
गपर्वतदैत्येषुनिकृष्टेपिचसम्वरः॥घनोघनेचदर्भेचगन्धरेगद
नेपिच॥१३॥न्यायेतुल्येविधौकालेवित्तेदण्डेचकल्पवाक्॥आ
वेतिअह्लवादेहेमनोयत्नधृतिष्वपि॥१४॥पर्यासोशिक्षितेपु
ण्येक्षेमेचकुशलध्वनिः॥प्रत्ययःशपथेछिद्रविश्वासेसत्यहेतु
षु॥१५॥पटःपक्ष्मपरित्राणेक्रयवस्तुप्रतिष्ठयोः॥दोषेचापगमे
दण्डेस्यादत्ययदृतिश्रुतिः॥१६॥प्रभावेतेजसिस्थानेधामशब्दो
निगद्यते॥ज्ञातावात्मनिचात्मीयेधनेस्वाख्याप्रवर्त्तते॥१७॥
चूडाख्यामृतयंत्रायोच्चानामापोत्कटारिषुपरिच्छेदेप्रमाणे
चमात्राख्यापरिकीर्तिता॥१८॥दुड्डबर्षेचपानीयेभूमौवाकूप
सरेमता॥साधुसत्वाप्रसस्येषुश्रेष्ठेसदितिचध्वनिः॥१९॥प्रधा
नेराजलिंगेचककुदाख्याप्रकीर्तिता॥परमंडनयोर्निष्कोनिष्कोदीना
ररुक्मयोः॥२०॥पुपुल्लोसद्गृपोरंकःस्यादंकेलेख्यलक्ष्म
णे॥त्रिशिरस्केनरेनीरेकवंधःखेचरेपिच॥२१॥मेरौवृक्षविशे
षेचवंशशब्दस्तुकार्मुके॥अक्षिरोमस्मृतंवर्त्मवर्त्ममार्गःप्र
कीर्तितः॥२२॥वर्ष्मदेहप्रमाणेस्याद्वर्ष्मदेहश्चकथ्यते॥दाया
दोवान्धवःप्रोक्तोदायादस्तनयोमतः॥२३॥विग्रहःसमरेभेदे
विग्रहोवपुरुच्यते॥प्रकोष्ठःकूर्परस्याधःप्रकोष्ठोद्वारकोष्ठके
॥प्रोक्तंवितानमुल्लोचवितानःशून्यउच्यते॥सतीदाक्षायिणी
देवीसुचरित्रावलासती॥२५॥वधूर्नारीचधूर्भार्यावधूःपुत्रव
धूरपि॥रक्षःकशिपुराख्यातःप्रावारःकशिपुर्मतः॥२६॥आड
म्बरोगजारावस्तूर्यनादश्चकथ्यते॥कपर्द्दोहरजटाजूटःस्यात्क
पर्दस्तुकामिनी॥२७॥तूवरोनिविषाणोगौर्निस्त्रीशस्तूवरःपुमा
न्॥पापीयांसोनिशंसाःस्युर्निशंसावन्दिनःस्मृताः॥१२८॥

शारदस्तु शरत्कालःस्याद्धृष्टस्तु शारदः॥ उपह्वर रहस्यान्तस
मीपंस्यादुपह्वरम्॥२९॥प्रस्वेदोपि निदाघःस्यान्निदाघोग्री ष्मउ
च्यते॥ कश्मलःस्यात्पिशाचे पि कश्मलोमोहउच्यते॥३०केतु
र्ग्रहविशेषश्च ध्वजेचैवउदाहृतः॥अवद्नाकथ्यतेरीढारीढागति
रपीष्यते॥३१॥वर्द्धनंछेदनेप्रोक्तंवर्द्धनवृद्धिरुच्यते॥कशेरुः
कज्जलेकन्दे पृष्ठस्यास्थ्निकशेरुका॥३२॥निवातमाश्रयंवि
न्द्यादभिन्नकवचंतथा॥कीनाशश्चकपर्दस्यात्कीनाशोयम
कर्षको॥३३॥ नागोवृक्षविशेषःस्यान्नागोवारणपन्नगौ॥कुलं
संघंकुलंगोत्रंशरीरंकुलमुच्यते॥पूगःपूगीफलंप्रोक्तंतथापूग
कदंबकम्॥ ज्ञेयाःसुमनसोदेवाःकुसुमानिचसज्जनाः॥३४॥
कुसुमंपुष्पमित्याहुःकुसुमंरजउच्यते॥धवःपतिर्धवोमर्त्यो वृ
क्षजातिर्धवोमतः॥३५॥त्र्यम्बकस्ताम्रधातुस्यात्र्यंबकश्चम
हेश्वरः॥ शिफाशेफालिकाज्ञेयाशिफाशाखाशिफाजटा॥३६
पुण्यंसुविहितंकर्मपवित्रपुण्यमेवच॥खलोनीचःखलोराशि
खलःपिण्याकएवच॥३७॥शालाश्लाघाशिलाशालाशालाशा
खाचवेश्मनि॥माल्यंमालाशिरोमाल्यंमाल्यंमालउदाहृतः॥३८॥
राढादेशविशेषश्चराढाशोभाविधीयते॥पलंमांसंपलंमानंपलो
मूर्खःपलंतुला॥३९॥आलिःसहचरीज्ञेयापंक्तिरालिरुदाहृतः
॥दलमर्द्धेन्दलंपत्रंदलंहस्यादिसाधनम्॥४०॥ आजिःस्यात्स
मभूभागःसंग्रामोप्याजिरुच्यते॥प्रतिज्ञासंगरोज्ञेयःसंग्रामः
संगरोमतः॥४१॥उलूकःपुरुहूतःस्यात्पुरुहूतःपुरन्दरः॥आ
तंकेगजरेकुन्तेमृत्युःस्यान्मरणेपिच॥४२॥शपाविद्युत्यवि शं
पाशंपाशंखध्वनिर्मतः॥उपर्यभोधरेस्वर्णेविदुरभ्रंविपश्चितः॥
४३॥निवृत्तावभिधेयेर्थोधनेप्रोक्तःप्रयोजने॥क्रतौक्रोधेतथा
दैन्येमन्युशब्दउचस्मृते॥४४॥बहुलाकृत्तिकाज्ञेयागावश्च
बहुलामता॥प्राध्वंबंधनमित्युक्तंप्राध्वं पथकेचसूरिभिः॥४५

हरिणः पांडुरो वर्णः सारंगो हरिणो मतः॥ करटः कातरो ज्ञेयः कर टो ध्वांक्ष उच्यते॥४६॥ कर्करे दुःस्मृतो गृध्रः कर्करेटुरमर्षणः॥ सौधाव यव विज्ञानगमनेषु कलामता॥४७॥ तुषारः सुद्रपाषा ण स्तुषारः शीत उच्यते॥ अमृतं वारि विज्ञेयं देवभोज्यं तथा मृतम्॥४८॥ कुन्त्याभूमि समाख्याता कुन्त्याकुन्तक दम्बकं॥ पणे क्षेकितवे द्यूते दुरोदर इति स्मृतः॥४९॥ दीप्तौ दृष्टौ च ता रा सुज्योतिः शब्दो विधीयते॥ रोगा तौ भाग्य मूढाल्पा मंदाः प्रोक्ता विचक्षणैः॥५०॥ शास्त्रे प्रमाण मिच्छंति स्थितौ हेतौ च कोविदाः॥ मणिः कलं क्षुरो ज्ञेयो मणिको मणिरुच्यते॥५१॥ विषं पानीयमि त्युक्तं विषमप्यं तरोरगः॥ वाजमन्नं गरुद्दाजो वाजं पीयूषमिष्य ते॥५२॥ व्रजो गोष्ठं व्रजो मार्गो व्रजः संघो व्रजो गणम्॥ वीर्यं शुक्रं बलं वीर्यं वीर्यं वीजमुदाहृतम्॥५३॥ नक्षत्रस्य मघा नाम कुन्द स्य कलिका मघा॥ द्विजिह्वः सूचको ज्ञेयो द्विजिह्वस्तु भुजंगमः॥ ५४॥ विज्ञेयं शयनं शय्या शय्या पुस्तक संचयः॥ तरसं मास समाख्या तं तरसं बलमुच्यते॥५५॥ वारुणी मदिरा ज्ञेया पश्चिमा दिक्च वा रुणी॥ मन्दुरा वाजिशाला स्यादावासोपि च मंदुरः॥५६॥ सुनृतः शि क्षितो मर्त्यः सुनृतं सत्य वहूत्तः॥ कीकसो वानरो भिक्षुः कीर्त्ति तं च स्थि कीकसम्॥५७॥ रोमंथः स्यात्पशू द्गारो रोमन्थः कीटवर्त्तनम्॥ हरिद्रा रजनी प्रोक्ता रजनी च विभावरी॥५८॥ परिघः परिघातः स्या त्परिघो दंड उच्यते॥ धरा पृथिवी धरा धारा धरः शैलो धरा नृतिः॥ मूले कन्दः किल कन्दः केदो वारिद उच्यते॥ करो हस्तः करो रश्मिः करः कर्षक वेतनम्॥५९॥ हूं हे दुंदुभिरक्षे च दुन्दुभिः स्यात्तथा नकः ॥प्रोक्तं विपिनमुद्यानमुद्यानं गमनं स्मृतम्॥६०॥ वर्द्धनी च घटी ज्ञेया वर्द्धनी तृणकूर्चिका॥ कुंकुमं रुधिरं ज्ञेयं रुधिरं क्षतजं स्मृतम्॥६१ नंदनः सज्जनः पुत्रो नंदनं स्वर्गवाटिका॥ मान संकेत मित्युक्तं मान सं त्रैद संसरः॥६२॥ धावनं शोधनं प्रोक्तं धावनं शीघ्रवर्तनम्॥ ९

स्यंदनारव्याद्रुमेशावेस्यन्दनोरथउच्यते॥६३॥तुरायणःसमस्त
ह्लोक्तिपाहीनस्तुरायण॥परायणंरिपोस्थानंतत्परश्चपरायणः॥
॥६४॥करिपृष्ठेकुलेवेणौवंशारव्याकविभिःस्मृता॥जटाजूटेशिखं
डोक्तिःकलापेपिशिखंडिन॥६५॥शिष्टभाजनदेहेषुपात्रशब्दःप्र
वर्त्तते॥पादत्राणेदलेपक्षेसेन्यवस्तुनिपक्षवाक्॥६६॥दून्येपिप
रिवारेपिकृपणेपिचकोशवाक्॥हंसेग्नौगरुडेचन्द्रेद्विजराजइति
ध्वनिः॥६७॥कैवर्तेपिचकैवर्तःकैवर्तशलिलेचरे॥पिप्पलारव्याज
लाश्वत्थवस्त्रेकैवर्तेवस्तुषु॥६८॥करवीरोश्वमारःस्यादंगुष्ठंकर
वीरक॥करीणांबधनस्थानंवारिवारिजलंमतम्॥६९॥प्रचुरंभू
रिविज्ञेयंभूरिकांचनमेवच॥सूदःस्यात्सूपकारश्चसूदोज्ञेयःकु
टुबिकः॥७०॥भषकोदुर्ज्जनोज्ञेयोभषकःशरमासुत॥सूतो
भास्करइत्युक्तःसूतःसारथिरुच्यते॥७१॥प्रतिरोधकस्तुसौध.
स्याद्दुर्ज्जनःप्रतिरोधक॥सौवीरश्चविरोधःस्यात्सौवीरंकंजिकं
मतम्॥७२॥दौर्मनस्यंघृणाप्रोक्ताघृणाचकरुणामता॥भंगः
पलायनंवीचिर्भंगःसस्यचभंजनम्॥७३॥तीक्ष्णतीव्रंसमा
रव्यातंतीक्ष्णलोहमुशंतिच॥मार्ग्गणःपावकोज्ञेयोमार्गणोपि
शिलीमुख॥७४॥भ्रूकुटीसुकरस्त्रोक्तोभ्रूकुटीचरूषीवलः॥मृणा
लंविशिनीमूलम्मृणालंचजलाकुलं॥७५॥काव्यातुपूतनाज्ञे
याकाव्यंग्रंथनिबंधनं॥ह्रस्वदीर्घप्लुतज्ञेयंप्लुतंपिचत्व्यथाकृतिः
॥७६॥रुक्मंहेमविजानीयाद्रुक्मंरजतमुच्यते॥उत्पलंनलिनंप्रो
क्तंउत्पलंकुष्ठमुत्तमम्॥७७॥वसुराचालनीप्रोक्तावसुरापल्लभा
स्मृता॥रजतेकलधौतंस्यात्कलधौतचकांचने॥७८॥प्रधानंप्र
कृतिःस्यान्प्रधानंविदुरुत्तमम्॥चक्रमप्यरविंदःस्यादरविंदःस
रोरुहम्॥७९॥शृगालोजंबुकोभीरुःशृगालोदानवोमत॥त्रिद
शामरुत.प्रोक्तामरुतोपिसमीरणाः॥८०॥कुंडलमंडलंज्ञेयंकुं
डलंकर्णभूषणं॥प्रतिबंधःकुलाधारःप्रतिबंधोबलक्रिया॥८१॥

वर्तिर्द्दीपशिखासूत्रं वर्त्तिर्न्नेत्रांजनोचितम्॥ धुम्याटश्चकलिंगः स्यात्कलिंगोदेशउच्यते॥८२॥ शैलेतृणविशेषेर्के त्रिषुगर्म्मुदि मिध्वनिः॥ वाल्मीकस्तुसमीकस्याद्वाल्मीकोवाग्विसारदः॥८३॥ सामजः कुंजरोद्गेयः समाजः सामजोमतः॥ वाजिकापक्षिजातिः स्याद्वाजिकानीलमक्षिका॥८४॥ सारसोलक्ष्मणः प्रोक्तोलक्ष्मणो राघवानुजः॥ लक्ष्मास्यात्कंदजातिस्यात्चिन्हंलक्ष्म चलक्ष्मणं॥८५॥ शंकरेवृषभेछन्दोविशेषेशांकरम्मतम्॥ कैजः केशेनिधौ कंजं कंजंपीयूषपद्मयोः॥८६॥ इतिश्रीकाश्मीराम्नायेमहाक्षपणकविरचितेनेकार्थध्वनिमजर्यामर्धश्लोकाधिकारः समाप्तः॥ अथपादाधिकारमाह॥ राजाचंद्रोनृपोराजापयः क्षीरंपयोजलं॥ मित्रोभानुः सुहृन्मित्रंदरंछिद्रंदरोभयं॥१॥ श्रीकंठः स्थावरंस्थाणुर्हरश्छागाच्युताग्रजे॥ गोविंदौहरिगोसंख्यौशिवकृष्णौवृषाकपि॥२॥ शरीरोत्सेधयोः कायः संख्यावधिप्रतिज्ञयोः॥ तेजः पुरीषयोर्वर्चः सौवर्चोभक्तरक्तयोः॥३॥ सरित्समुद्रयोः सिन्धुशालः प्राकारवृक्षयोः॥ घातकात्यल्पयोः स्तोकंपापव्यसनयोरघम्॥४॥ पिपाशालोभयोस्तृष्णाभुवनंलोकतोयपोः॥ कारोवधेनिश्चयेच वाडवोवन्हिविप्रयोः॥५॥ शष्पंवालतृणंप्रोक्तंदारुकाष्ठंनिगद्य॥शेशवंदारकेवाल्यंकिंकिनीक्षुद्रघंटिका॥६॥ संध्यावमदयोः कल्यंधरोधूर्तेचपर्वते॥ निस्त्रिंशोखड्गपापिष्टौ भृंगबाणौशिलीमुखौ॥७॥ सुरमीनावनिमिषौवाष्पउष्मातथाश्रुवा॥ ओघः पुरोथवेगश्चवनंकाननमंवुच॥८॥ इलाभूमिर्मतागौश्चसन्नाचितंचनामच॥ शैलोद्रिरंशुमानिंद्रोभानुर्भानुरहस्करः॥९॥ भषकोदुर्जनः प्रोक्तोभषकः सरमासुतः॥ वृक्षजातिगजेपीलूपद्मैरोगमागेणौ॥१०॥ मुकको ष्टौचकरभौद्रावौक्रंदनविभ्रमौ॥ वनारणयानलौदावौजीमूतौमेघपर्वतौ॥११॥ वल्लवौसूदगोपालौचिकुरौकेशचंचलौ॥ मयउष्ट्रश्चगंधर्वौलक्ष्मीर्माचनिगद्यते॥१२॥ ९

कंपानीयंशिरप्रोक्तंनिदाघमिदशीतले॥ अरिष्टपिष्टकौकल्कौवृत्रौदानववैरिणौ॥१३॥ पंगूपस्मारुणौशोणौअम्बरेव्योमवाशशी॥ उदारख्यौमरुद्वैह्यौन्यग्रोधौवटकामुकौ॥१४॥ ध्वांक्षकाकौवकौध्वांक्षःनगःशैलोनगोद्रुमः॥ खलोद्रूस्वःखलःक्रूरःक्षितिःपृथ्वीक्षितिःक्षय॥१५॥ क्षयंगेदस्ययोर्ह्रास श्रमःखेदश्रमःक्रिया॥ कंठोध्वनिर्गलःकण्ठःप्रदिःकूपप्रदिःसरः॥१६॥ दरेचशूकरेकोलःकलिःकलहकालुपोः॥ कांडःशरोजलंकांडंघोरस्यादभिसारक॥१७॥ शशांकस्वर्णयोश्चंद्रःकरिःशूकरलोहयो॥ वर्हिर्दर्भेजलंबर्हिर्लोङ्गलंदलमिष्यते॥१८॥ निमित्तहृदयोर्हेतुर्हरौवज्रमहेश्वरौ॥ कश्मीरप्रथुकौकीरौवीरौविक्रमवान्यवौ॥१९॥ कौशिकौवासवोलूकौसायकौवानमार्गणौ॥ ध्वान्ताचलौमतौविन्ध्यौशिखिनौबर्हिपावकौ॥२०॥ धीरौसात्विकधीमन्तौवरौश्रेष्ठहुताशनौ॥ उत्संगसुकरौक्रोष्टौवत्सौतर्णकपुत्रकौ॥२१॥ कान्तानातपयोःछायादयाहिंसानुकंपयो॥ द्रुमोवृक्षेपुशेलेषुध्रुवौनक्षत्रनिश्चयौ॥२२॥ संघातेपूरणोपूरःसूरौसूर्यनरेश्वरौ॥ मकरःकोमलेकाव्येसमरौयुद्धसंघयोः॥२३॥ पतंगौसलभानेतावकौस्फटिकभास्करौ॥ कार्ष्यंशुद्धेतथाक्रत्येवभ्रूनकुलपिंगलौ॥२४॥ स्पष्टप्रौस्मृतौव्यक्तौदीप्तिश्चछातथारुचि॥ गुह्येकार्यंचकोपीनंसंज्ञाख्येनामचेतने॥२५॥ मधुरौचप्रियस्वादौशम्भूब्रह्ममहेश्वरौ॥ नित्यंस्वंचनिजंप्रोक्तंबलदीप्तितथौजसी॥२६॥ हायनंवर्षमोजश्चदेतीशस्त्राच्चिर्षीमते॥ आसासंज्ञेककुप्रोक्तास्तनमेघौपयोधरौ॥२७॥ अभिरूपेबुधेकान्तिर्ध्यामिश्वसत्कुलस्त्रियोः॥ उदयाधिगमौप्राप्तौवसुस्तूपौविभावसू॥२८॥ वृजिनमलिनेपापेप्रज्ञासंबुद्धिचिन्हयो॥ समर्थेधिकृतेध्यक्षोलीर्यौद्योगोपराक्रमौ॥२९॥ नराद्दोमूर्खकेभीरौप्लवंगःकपिभेकयोः॥ यज्ञःपूजाचदानश्चदृष्टिरक्षितथामतौ॥३०॥ चीवरंवल्कलेवस्त्रेककक

एठे तथोदरे॥पार्थसि श्रवणे कर्णः सूनुः पुत्रे तथानुजे॥३१॥कुरुस्था नसमरे मत्स्ये स्तूपं मूर्ते च दुम्बरे॥अवटाख्यौ कूपगर्तौ दन्तविशे तथा द्विजो॥३२॥असत्यप्रियो व्यलीकौ च वचो वाक्यं च गीर्मता॥अंतेवासीति शिष्ये च नापिते पि तथा स्मृतः॥३३॥अंतेवासीग णानां च नानाशब्दार्थसारणे॥उपान्यस्यत सौभाग्यं पठतां शृ ण्वतामपि॥३४॥ इतिश्रीकाश्मीराम्नायेमहाक्षपणकविरचिते नेकार्थध्वनिमंजर्यांपादाधिकारः समाप्तः॥ ॥श्रीरामचंद्रायनमः

---

॥अथहारावलीलिख्यते॥

श्रीगणेशायनमः

---

श्रीवज्रयोगिन्यैनमः॥भुजगपतिविमुक्तस्वच्छनिर्मोकवल्ली विलसितमनुकुर्वन्यस्यगंगाप्रवाहः॥शिरसिसरसभास्वन्मा लतीदामलक्ष्मींलपयति हिमगौरःसोस्तुवःसाध्यसिद्ध्यै॥१॥ कल्पावसानसमयेस्थितयैकवीनांदेहांतरंकिमपिया सृजति प्रसन्ना॥यस्याःप्रसादपरमाणुरपिप्रतिष्ठामभ्येतिकामपिन मामिसरस्वतींताम्॥२॥निर्मत्सराःसुकृतिनःखलुयेविविच्य कर्णेगुणस्यकणमप्यवतंसयंति॥येषांमनोनरमतेपरदोषवा देतेकेचिदेवविरलाभुविसंचरंति॥३॥मुक्तामयातिमधुरामस्र णावदातच्छायाधिरागतरलामलसद्गुणश्रीः॥साध्वीसतांभ जतुकंठमसौप्रियेवहारावलीविरचितापुरुषोत्तमेन॥४॥कि न्नैवसंतिसुधियामभिधानकोशाःकिंतुप्रसिद्धविषयन्यवहा रभाजः॥गोष्ठीषुवादपरमोहफलास्तकेषांहारावलीनविदधा तिविदग्धिमानं॥५॥संकेतमेवगणयंतिपरंविदग्धावाचांविद ग्धिमनिमज्जतियस्यलोकः॥गोष्ठीषुयःपरमशाब्दिकदुर्गमासु दुर्बोधशब्दगतसंशयमुच्छिनत्ति॥६॥आख्याधशब्दतःश्लो

कैरथैरातलिनात्तत:॥शब्दा:पादैर्विनोद्धृत्या-ज्ञाऽनेकार्थत स्तत:॥७॥ ॥विषमनयनशंकूचंद्रमौलिर्भगालीवृषभगति गणेशौरेरिद्धाणो वृषांक:॥त्रिपुरदहनशूलिस्थाणुखट्वांगि द्विड्प्रियतमशितिकंठाभस्मकल्माषकंठौ॥१६॥८॥शतधामा चतुष्पाणि:पृश्निगर्भोगदाग्रज:गदीकौस्तुभवक्षाश्चपांचजन्यधरोच्युत:॥८॥९॥वैनतेय:पक्षिसिंह:शाल्मलीहरिवाहन:॥अमृताहरणस्तार्क्ष्यो नागाशनखगेश्वरो॥८॥१०॥खगपतंग वियन्मणिभानवो हरिभगेननिदाघकराद्र्य:॥किरणमालि विरोचनहेलयो दिनमणिस्तरणिश्च दिनप्रणी:॥१५॥११॥श्रुतश्रवोनुज:क्रोडो मंदश्छायासुत:शनि:॥सप्तार्चिर्नीलवसन:पातंगि:क्रूरलोचन:॥८॥१२॥दाक्षायणीपतिबलक्षगुपक्षजन्मतुंगीशरात्रिमणिदर्शविपत्सुधांग:॥राजासमुद्रनवनीततमोनुदैमाग्लौरिंदुरेणतिलकोहरिरोहिणीशौ॥१६॥१३॥मतंगज:पुष्करदीर्घमारुतो विलोमजिह्वोजलकांक्षिसिंधुरो॥द्विपापिस्तूर्यश्रुतिकुंभिसामजामहामद:पेचकिपद्मिपीलव:॥१४॥१४॥दर्वीकरोविषधर:श्वसनाशनोहिश्चक्री फणाभरविषायुधदीर्घपृष्ठा:॥कुंभीनसद्विरसनोसमकोलदंष्ट्रिगोकर्णकुंडलिलतारसनाविषास्या॥१६॥१५॥मयास्योपकृतंपूर्वमयंचोपकरिष्यति॥इतिय:क्रियतेसंधि:प्रतीहार:सउच्यते॥१॥१६॥शेषमक्षरमादायप्रतिश्लोकक्रमेणयत्॥अन्योन्यंपठ्यतेश्लोक:प्रतिमालेतिसामता॥१॥१७॥नभश्चरोवायुदारुर्वनदोगगनध्वज॥व्योमधूमोजलमसि:स्वतमाल पयोधर:॥८॥१८॥हर्षाद्युत्सवकालेयदलंकारांबरादिकम्॥आकृष्यगृह्यतेपूर्णपात्रंपूर्णानकंचतत्॥२॥१९॥सुरतेकर्णदंशेषुपश्चदेशीयभो

षया॥ दंपत्योर्जल्पितं मंदं मन्मनं तद्विदुर्बुधाः १॥२०॥ यद्दीय तेतु देवेभ्यो मनोराज्यस्य सिद्धये॥ उपयाचितकं दिव्यदोहदं तद्विदुर्बुधाः २॥२१॥ नक्तं निर्गत्य यत्किंचिच्छुभाशुभकरं वचः श्रूयते तद्विदुर्धीरा दैवप्रश्नमुपश्रुतिं २॥२२॥ वृद्धस्त्रवस्रमिश्रा दुरिद्रतूलं मनीषिणः॥ ग्रीष्महासं वंशफकं फेनवातत्तूलमरुध्वजं ६॥२३ दशेंधनो गृहमणिः स्नेहाशः कज्जलध्वजः॥ जटाज्वालो दशाकर्षी कथितो बुद्धद्वश्यभिः ६॥२४॥ गोमयच्छत्रिकामाहुर्दिलीरं च शिलींध्रकं॥ उर्व्यंग च दशारोहं गोलासानपरे विदुः ६॥२५॥ हिमवान् १ हेमकूटश्च १ निषधो १ मेरु १ रेव च॥ चैत्रः १ कर्णी च १ शृंगी १ च सप्तैते वर्षपर्वताः॥२६॥ इति श्लोकावधिः॥ व्याधो मृगवधाजीवो निषादः पुल्कसः प्लवः ५ वालवायजमिच्छंति वैदूर्यमणिमुत्तमाः॥२७॥ कालग्रंथिः समाः संवन्मासमा नो युगांसकः ५ मासो वर्षांशकः श्रामो वर्षांगः स्याद्दहर्गणः ५॥२८॥ मदयोगविधानं तु व्यस्तारं १ करिणां विदुः॥ पृष्ठवंशस्य यन्मांसं तल्पनं १ तस्य चक्षते॥२९॥ कर्णवेधनिका प्रोक्ता नालिके १ तिविषाणिनां॥ प्रवेष्ट १ मंतः स्वेदानां दंतमांसं विदुर्बुधाः ३०॥ कुमारभृत्या १ गर्भिण्याः परिचर्याभिधीयते॥ नवोढावस्त्रमानं दपटं २ मिच्छंति सूरयः॥३१॥ कर्णीसुतो मूलदेवो मूलभद्रः कुलांकुरः॥

---

रस्य १।१२ चंद्रमसः १६।१३। गजस्य १४।१४। सर्पस्य १६।१५। प्रत्युपकारार्थकृतसमंजसः १।१६। अंत्याक्षरक्रमेण श्लोकपाठस्य १।१७। मेघस्य ८।१८। दर्पवस्त्राद्याकर्षणस्य २।१९। दंपत्योः शनैः कथनस्य १।२०। इष्टार्थं देवेभ्यो दीयमानद्रव्यस्य २।२१। आकाशवाण्याः २।२२। आकाशेउड्डीयमानस्त्रस्य ६।२३। प्रदीपस्य ६।२४। गोमयछत्रिकायाः ६।२५। सप्तवर्षपर्वतानां प्रत्येकमेकैकं।२६। व्याधस्य ५ वैदूर्यस्य २।२७। संवत्सरस्य ५ मासस्य ५।२८। करिणां मदयोगविधानस्य १ गजपृष्ठमांसस्य १।२९।

अर्थश्लो.

॥४॥ ज्येष्ठामूलीयमिच्छतिमासमाषाढ पूर्वजं १॥३२॥ नित्यकर्म समाचारनिष्ठुरत्वेकटुकता॥१॥ वीणानुबधो धीमद्भिरुपनाहो २ ऽभिधीयते॥३३॥ स्यात्सालिकाकुंतलिका २ दध्यादिच्छेदनी तु या॥ वैशाखोदधिचारःस्यात्तक्राटःकरघर्षणः४॥३४॥ स्यादाषाढभवोभौमोनवार्चिर्गगनोल्मुक॥४॥ पंचार्चिश्चश्रविष्ठाजोज्ञ एकांगःप्रहर्षणः५॥३५॥ दीदिविर्हूदशार्चिःस्याज्जीवःआक्फल्गुनीभवः॥४॥ काव्योदैत्यपुरोधाःस्यात्षोडशार्चिर्मघाभवः४ ॥३६॥ उपप्लवोकचःकेतुराश्लेषाभवआह्निकः५॥ ज्योतीरथोग्रहधारोध्रुवउत्तानपादजः४॥३७॥ स्वर्भानुंग्रहकल्लोलं विदुस्त्वपिशाचकं३॥ वनीपकोर्थयाचनकोवसुकीदोमुखपचः४॥३८॥ जायमानविषाणाग्रेकराहो १ महिषीशिशौ॥ छेदोहस्तेनसस्यानाकटभंग १ उदाहृतः॥३९॥ जलत्राजंगमकुटीकावारीमूर्द्धकर्पटी४॥ उष्णवारणमुल्कूटश्चत्रकांगंचपुटोटजं४॥४०॥ मुनीनीचचिताकुल्यांपर्णाटजसहोटजो॥२॥ कारोत्तरश्चवीनाहोप्रहिरंधूजेलांबिका४॥४१॥ जलकूपीजलाढीलीतलकंपुष्करिण्यपि४॥ असन्नास्तमयःकश्चिदुपधूपित १ इष्यते॥४२॥ तत्क्षणादित्यमुक्तानुवदंत्यंगारिणीं १ दिशं॥ अगारिते १ पलाशानांकलिकानिर्गमोभवेत्॥४३॥ गांधारंरक्तचूर्णनुसिंदूरंरक्तवालुकं४॥ कुसृत्याविभवान्वेषी पार्श्विकःसंधिजीवक॥४४॥

---

गजकर्णवेधिन्या १ गजदंतमासस्य १॥३०॥ गर्भिणीपरिचर्याया १ नवोढावस्त्रस्य २॥३१॥ ग्रामप्रधानदेवतायाः ४ ज्येष्ठमासस्य १॥३२॥ नित्यकर्माशक्तताया १ वैरानुबंधस्य २॥३३॥ दध्यादिच्छेदिन्या २ दधिमंथनदंडस्य ४॥३४॥ मंगलस्य ४ बुधस्य ५॥३५॥ बृहस्पते ४ शुक्रस्य ४॥३६॥ केतो ५ ध्रुवस्य ४॥३७॥ राहो ३ याचकस्य ४॥३८॥ जातशृगस्यमहिषीशिशो १ हस्तेनसस्यछेदस्य १॥३९॥ जलत्राया ४ छत्रस्य ४॥४०॥ मुनिचिताकु

अर्धश्लो

अधश्वरोभवेच्चौरः कुसुमालः कुजंभलः ४ ॥ प्रोक्तः कीरकुसुंभ
स्तु नागकेसरचूर्णके २ ॥ ४५ ॥ बर्बरं बर्बरीकं च बर्बरीत्यपि चे
ष्यते ॥ अभावात्स्त्री परित्यागस्तु रगब्रह्मचर्यकं १ ॥ ४६ ॥ यमि
नां यद्व्रतं गोप्यं तत्तवंजनतरं विदुः १ स्यादाचामनकः प्रोंठः कट
कोलः पतद्ग्रहः ४ ॥ ४७ ॥ मेलांमेदामसिमणिर्मसिधानीमसिप्र
सूः ५ ॥ बालोपरीतं तु विदुः पंचावटमुरस्कटं ३ ॥ ४८ ॥ नारीणां मं
डलीनृत्यं बुधा हल्लीषकं १ विदुः ॥ मारीचो याजकगजो राजह
स्तीमदोत्कटः ॥ ४९ ॥ अलंकारसुवर्णं यत्तच्छृंगीकनकं १ मतं ॥
रतिलक्षं निधुवनं संयोजन ३ मितिस्मृतं ॥ ५० ॥ जीमूतकुटकु
ट्टीरकुट्टाराः कंदराकरः ४ ॥ उद्देशो गंडकूपस्तु पर्वतस्याभिधी
यते ॥ ५१ ॥ वासिता धेनुका चैव वशा च करिणी ५ मता ॥ ब्रह्मा
ग्रभूः क्रतुपशुः सिंहविक्रांतवाजिनौ ५ ॥ ५२ ॥ समुद्रगा निर्झ
रिणी तलोदा जंबालिनी शैवलिनी तरंगिणी ६ ॥ विपाठकार्द
वकपत्रवाहाः पत्री खगो वीरतरोस्त्रकंटकः ७ ॥ ५३ ॥ वर्णदूतः
स्वस्तिमुखो लेखो वाचिकहारकः ४ ॥ लेखो निबध्यते येन तत्र
काचनकाभिधा १ ॥ ५४ ॥ स्मारा कुंमाणिमंथं च विदुः सिंधूपलं बुधा
३ ॥ पिशितं पललं मांसं क्रव्यमामिषमुद्घसं ६ ॥ ५५ ॥ पारावारम
हाकच्छौ महीप्राचीरदारदौ ४ ॥ जिह्वादरः कीकशास्यश्वं चुम

---

स्याः २ कूपस्य ४ । ५१ । पुष्करिण्याः ४ आसन्नास्तमयस्य १ । ४२ । तल्लक्षणादि
त्यमुक्तदिशः १ पलाशकलिकायाः १ । ४३ । सिंदूरस्य ४ पिशुनस्य २ । ४४ । दि
वाचौरस्य २ नागकेसरचूर्णस्य २ । ४५ । बर्बरस्य ३ ॥ अभावात्स्त्रीपरि
त्यागस्य १ । ४६ । यतीनां गोप्यमैथुनस्य १ पतद्ग्रहस्य ४ । ४७ । मसिधा
न्याः ५ बालकपरिधानवस्त्रस्य ३ । ४८ । स्त्रीनृत्यस्य १ राजहस्तिनः ४
। ४९ । अलंकारसुवर्णस्य १ मैथुनस्य ३ । ५० । पर्वतस्य ४ पर्वतोच्चस्थल
स्य १ । ५१ । हस्तिन्याः ५ अश्वस्य ५ । ५२ । नद्याः ६ शरस्य ७ । ५३ । लिखनपत्र

त्तरुशायिनौ॥४॥५६॥ इंद्रक्रीडासरः प्राज्ञैर्नंदीसर १ इतिस्मृ
तं॥५७॥ धूमोर्णापतिरुद्दिष्टो यमोमहिषवाहनः॥२॥५७॥ प
योघनो मेघकफो घनोपलो मेघास्थिबीजो दकतो षड्भिः ६
शंपा चिराभा चपला छटाभा ह्रादिन्य धीरा घनवल्लिका च॥७
॥५८॥ पादालिंदीतरंडानौस्तरणिस्तारणिस्तरिः६॥ किलाटः
शोषितक्षीरपिंडः२ सूरिभिरिष्यते॥५९॥ कालायसमयस्तीक्ष्णं
गिरिसारं च शस्तकं॥५॥ ह्यगवीनं रसजं मंथजं च कलंबुटं ४
॥६०॥ एकशफांघ्रिकबंधमाहुर्दामांचलं बुधाः॥ वेतास्त्रीपुं
सयोश्चिन्हंसामुद्रिक १ उदाहृतः॥६१॥ तिंतिलीकास्थिभि
र्द्यूतक्रीडायां चुंचुलिर्भवेत्॥ वक्रा ललाटगास्तिस्रो भस्मरे
खास्त्रिपुंड्रकं ३॥६२॥ हालाकामालिकामंडाधीरास्यात्मद
नी च माध्वी च ६॥ आहुश्चषकं तु पानपात्रं पारीमप्यनुतर्षणं क
वींद्राः॥६३॥ कुसुंभः करकश्चैव स्यमुखः कमंडलुः ४ स्मृतः॥ अ
सहायो नर्तकश्च तालावचर १ इष्यते॥६४॥ कथितः कौमुदीवृ
क्षो दीपवृक्षः शिखातरुः ३॥ कोजागरे तथा सद्भिः कौमुदीचारं
इष्यते॥६५॥ समुद्रगृहमित्याहुर्जलयंत्रनिकेतनं २॥ प्रेतादिभि
र्गृहीतो यः स आविष्टो १ भ्रमन्वदि॥६६॥ हिममिंद्राग्निधूमश्च
खबाष्पो रजनीजलं ४॥ ये शिवायतनोत्सृष्टास्ते संध्याबलयो
वृषाः॥६७॥ विषाक्तास्त्रहतस्याहुः पशोर्मांसं तु गृंजनं १॥ धूमि

---

स्य ४ पत्रीबधनस्य १।५४। सैंधवलवणस्य ३ मांसस्य ६।५५। समुद्रस्य ४
पक्षिण-४।५६। इंद्रक्रीडासरसः १ यमस्य ३।५७। मेघप्रस्तरस्य ६ विद्युत
७।५८। नौकाया ६ शोधितक्षीरपिंडस्य २।५९। लोहस्य ५ नवनीतस्य
४।६०। एकखुरयुक्तचरणबंधनस्य ३ स्त्रीपुरुषचिन्हवेतु १।६१। अस्थि
भिर्द्यूतक्रीडाया २ ललाटस्थभस्मरेखाया ।३।६२। सुराया-६ पानपात्रस्य ४
।६३। कमंडलो ४ असहायनर्तकस्य १।६४। दीपवृक्षस्य ३ कोजागराया ।६५

अर्धश्लोकाः

काधूममहिषीहिमझ्झटिः कुहेलिका४॥६८॥पोताच्छादनमाहु
स्कवरकमथवस्त्रकुट्टिमंकस्यः॥तंत्रविमुक्तंवासो निष्प्रवणिं
निष्प्रवाणिं १२॥६९॥महाघोषंक्रयारो हंहट्टंपण्याजिरं४विदुः
॥बहुमानुषसंकीर्णंनिघंटंचकरांगणं॥२॥७०॥शालभंजीदा
रुगर्भाकुरंटीदारुपुत्रिका४॥कादंबिनीनवोमेघःकालीस्यात्का
लिका३पिच॥७१॥क्रोशध्वनिःक्रोशताल्लोढक्काविजयमर्दलः
४॥स्यात्प्रतिपत्तिःपटहोलंपापटह२द्वयपि॥७२॥कुकूलंकाय
वलनंतनुत्रंदंशनं४विदुः॥शिरस्त्रंशीर्षरक्षंचशीर्षण्यंशीर्षकं४
चतत्॥७३॥स्याज्जालिकालोहमयीजालप्रायांगरक्षिणी२॥
पन्नधीपादविरजाःकोशीपादस्थी४भवेत्॥७४॥रुचकंलवणं
क्षारंतीक्ष्णंजलरसं३विदुः॥ज्योतिर्बीजंचखद्योतंध्वांतोन्मेषं
तमोमणिः५॥७५॥जलशूकरजलजिह्मोजलकंटकवार्भटौ त
थानक्रे६॥जलनकुलजलविडालौनीराखुजलप्लुवावुद्रे५॥७६
शिशुमारोजलकपिश्चपलांगोःसिपुच्छकः॥ग्राहोजलकिराट
श्चनक्रराजोजलाटकः४॥७७॥मृतकांतकश्वभीरुरेकधूर्तश
यालुवंचकाभरुजः७॥शालामृगोस्थिभक्षोग्राममृगोमंडलःक
पिलः५॥७८॥उल्कामुखीशृगालीयादीप्तजिह्वे१तिसामता॥
स्कंधवाहस्तुशंकश्चशृंगीगोरक्षधूर्तिलः५॥७९॥ हेरंबःकासरश्चै

---

जलपंत्रार्थगृहस्य२प्रेतादिगृहीतस्य१६६।हिमस्य४शिवालयोत्सृष्ट
वृषस्य२।६७।विपाक्तास्त्राहतपशुमांसस्य१कुहेलिकायाः४।६८।पोताच्छा
दनस्य३तंत्रविमुक्तवाससः१।६९।हट्टस्य४बहुनरसंकीर्णहट्टस्य२।७०
काष्ठपुत्तलिकायाः४नूतनमेघजालस्य३।७१।ढक्कायाः४पटहस्य२।७२
वस्त्रांगरक्षिण्याः४शिरस्त्राणस्य४।७३।लोहवर्मणः२उपानहः४।७४।
क्षारलवणस्य३खद्योतस्य५।७५।नक्रस्य५उद्रस्य५।७६।शिशुमारस्य
४ग्राहस्य४।७७।शृगालस्य७श्वुनः५।७८।उल्कामुखीशृगाल्याः१शा

वरक्ताक्षः सैरिभ४स्तथा॥ रोमशो बद्गुरोमा स्यादुरणश्च पृथूदरः ४॥८०॥ दूडिकस्तु बालवाह्यो वनछागोतिरोमशः ५॥ वरणो धूम्र शूकः स्यादुष्ट्रः श्रृंखलक४स्तथा॥८१॥ चक्रमुखः सूचिरोमा व राहः स्थूलनासिकः ४ कंठीरवस्तु पारींद्रः केसरी गजमाचल ४॥८२॥ नेत्रपिंडो वृषाद्रोमेनादः कुंदम४स्मृतः॥ गंधाखुर्गंध नकुलश्चुचुः पुंवृष४उच्यते॥८३॥ द्रोणो रिष्टो नालिजंघ आत्म घोषस्तु मौद्गलिः ५॥ गोभडीरः पंककीरो ह्रापुत्री राजभट्टिका ४ ॥८४॥ गंगाचिल्ली तु देवट्टी विम्बका जलकुक्कुटी ४॥ विट्सारिका तुकुणपी गोराटी गोकिराटिका ४॥८५॥ मृगेंद्रश्चटको घातिपक्षी ग्राहकमारकौ ४॥ कुलालकुक्कुटश्चाद्गुः कुक्कुभकुद्दकस्वरं ४॥ ८६॥ कर्कराक्षः कलादीनः खंजलेखस्तु खंजनः ४॥ प्रासादकुक्कु टो झल्लकंठो गृहकपोतकः ३॥८७॥ ध्वासपुष्टः कलकंठो मधुकं ठः कुहूमुखः ५॥ झंपाशी मत्स्यरंकः स्याज्जलमद्गुर्मणीचकः ४॥८८॥ कलविंकश्चित्रपृष्ठो गृहनीडो वृषायणः ५॥ वरंडा चित्र पादा च चित्रनेत्रा च सारिका ४॥८९॥ मयूरश्चटको दक्ष-कुकवाकु निशाकरः ४॥ शतपत्रः सितापांगः प्रचलाकी च चंद्रकी ४॥९०॥ किसलयमपि तरुरागं विदुर्लतापावकं प्रवालं च॥ ४॥ कंटकसंह्ला स्तरुनखसिताग्रदलं सूचिरां किल द्रुमराः ६॥९१॥ द्रोणीदल सू चिपुष्पो जंबूलः क्रकचच्छदः ४॥ मङ्गातिष्य फला धात्री वल्यामं

---

कुदादिवाहकरषभस्य ५।७९।महिषस्य ४ मेषस्य ४।८०। छूहूनरस्य ४ उष्ट्रस्य ४।८१। वराहस्य ४ सिंहस्य ४।८२। विडालस्य ४ छुछुंदर्या ४ ८३। दग्धकाकस्य ५ ह्रापुत्र्यारण्यपक्षिण ४।८४। गंगाचिल्या. ४ विट्सा रिकाया ४।८५। श्येनस्य ४ वनकुक्कुटस्य ४।८६। खंजरीटस्य ५ कपोत स्य ३।८७। कोकिलस्य ५।मत्स्यरंगस्य ४।८८। कलविंकस्य ५ सारिका या ४।८९। ग्रामकुक्कुटस्य ५ मयूरस्य ४।९०। नूतनपल्लवस्य ४ वृक्षकंट

अर्धश्लो

चरसाशिवा६॥९२॥सहस्रवीर्याविरजाभार्गवीमंडलीरुहा५
प्रहर्षिणीनिशाह्वाचलसागंधपलाशिका४॥९३॥मृदुपुष्पः
शूकतरुःशिरीषोविषनाशनः४॥वराहकालीकथितःसूर्या
वर्त्तस्तुशाब्दिकैः॥९४॥वज्रवल्यस्थिसंहारोहस्तिसुंडीच
नालिका४॥वनतिक्तस्त्रियांग्रीष्मातिरीटःपक्षसुंदरः३॥९५
मधुपुष्पोमधूकश्चगुडपुष्पोमधुद्रुमः४॥वृत्तपुष्पःप्रावृषेण्यो
हारिद्रुस्तहलिप्रियः४॥९६॥एलात्वचिसुगंधाचपुटिकाचर्म
संभवा४॥कूष्मांडकःपुष्पफलोघनवासश्चवेष्टकः४॥९७॥वे
षणःकासमर्दश्चपत्रोपस्करइत्यपि॥ओकोदशालीप्राचीर
मोघोलिरवहालिका॥५॥९८॥कल्पवर्त्तःप्रातराशःप्रातर्भोज
नमिष्यते॥शृगालिकाचडिंबश्चडमरंविद्रवो४पिच॥९९॥स्कं
धफलःस्मृतुंगश्चनारिकेलःपुटोदकः४॥गुडदारुर्मधुतृण
मसिपत्रोमहारसः४॥१००॥राजालुकोमहाकंदोमूलकोहस्ति
दंतकः॥क्षुद्ररसातिक्तगुंजासरघाविरूपकर्कटी४॥१॥क्षुद्रप
त्राचचांगेरीक्षुद्राम्लाचाम्ललोणिका४प्राचीनामलकंतंबद
रामलकं३तथा॥२॥पिष्टसौरभमेकांगंश्रीखंडंमालयं४विदुः
॥मृगनाभिर्मृगमदोगंधशेखर३मित्यपि॥३॥सिताभ्रंतरुसा
रंचघेरकंरसकेसरं॥४॥कालेयंवंशकंजोंगकालीयंवरचंदनं
५॥५॥तृणसाराभृसुफलारंभाचकदली४भवेत॥ऊर्ध्वासितः

---

कस्य६।९१।केतकस्य४धात्र्याः६।९२।दूर्वायाः५गंधपलासिकायाः४
।९३।शिरीषस्य४सूर्यावर्तस्य२।९४।अस्थिसंहारस्य४लोध्रस्य३।९५।
मधूकवृक्षस्य४कदंबस्य४।९६।एलायाः४कूष्मांडस्य४।९७।कासमर्द
स्य३भित्तेः५।९८।प्रातर्भोजनस्य३भीत्यापलायनस्य४।९९।नारिकेल
स्य४द्रुमो:४।१००।मूलस्य४करंजस्य४।१।आम्ललोणिकायाः४प्राची
नामलकस्य३।२।श्रीखंडस्य४।३।कस्तूर्याः३।३।कर्पूरस्य४अगुरुइति

अर्धश्लोका

परारुस्यात्तथाराजपटोलकः ३॥५॥ कुंकुमपीतकावेरघुसृणंकुसुमात्मकं ४ अरकोजलकेशश्चकावारं शैवलं ४ विदुः॥६॥ उन्मत्तःकाहलापुष्पोवृद्धपाटलिघाटिकौ ४ किंशुकःकरकःपर्णोलाक्षारसःसुभीरवः ५॥७॥ अमंडपंचांगुलवर्धमानागंधर्वहस्तस्त्रिपुटीफल ५ श्च॥ रेणुःसतीलस्तृणकेतुमूत्कवीजौकिलाटीचंततःसुपर्वा ६॥८॥ कचमालोमरुद्वाहोधूमोमेभःशिखिध्वजः ५॥ शाखानगर १ मा(हु)स्तद्य(द)भ्यर्णपुरातरं ॥९॥ आद्रुजलकरंकश्चजलजसूचिकामुखौ ३॥ उपजिव्हिकोत्सादिकाचवटिरुद्देहिकादिवी ५॥१०॥ शुल्बमोदुंबरंरक्तंम्लेछास्यताम्रकं ५ विदुः॥ दुर्नामादीर्घकोषीस्यात्पंकशुक्तिःसितालिका ४॥११॥ आकाशमूलीकुत्तृणंकुंभिकाजलवल्कल ४॥ शंबूकोजलडिंरः स्याद्दुश्चरःपंकमंडुकः ४॥१२॥ आटीलकंतर्णकानांस्थलीसुक्रीडनंमत॥ षष्टिःशब्दवतीधीरैखरवीरक १ इतिस्मृता॥१३॥ लेखात्रयांकितंभालंत्रिपताकं १ विदुर्बुधाः॥ अर्धचंद्रंकर्करेटंविदुरंगुलितोरणं ३॥१४॥ सिंदूजलंचगृहाम्लमवंतिसोमंतुषोदकशुक्त ५॥ नग्नाटकनिर्ग्रंथकभदंतदिगंबरकानग्ने ५॥१५॥ करपात्रंजलक्रीडाप्यायुक्षीकरपत्रिका ४॥ शराणांपत्ररचनाप त्रणा १ परिकीर्तिता॥१६॥ पंचभद्राह्वयास्तेयंपंचस्वंगेषुपुष्पिताः ५ श्वारकोमुद्गभुजांसस्याद्भूल्लुभपालकः १॥१७॥ निगालस्यो

---

रव्यातस्य ५।५। कदल्याः ४ पटोलस्य ३।५। कुंकुमस्य ४ शैवलस्य ४।६। धूत्तूरस्य ५ पलाशस्य ४।७। एरंडस्य ५ वंशस्य ६।८। धूमस्य ५ नगरांतिकपुरस्य १।९। शंखस्य ३ उपजिव्हिकाया ५।१०। ताम्रस्य ५ पंकशुक्तेः ४।११। कुंभिकाया ४ शंबूकस्य ४।१२। तर्णकक्रीडनस्य १ शब्दवतीपष्ट्याः १।१३। लेखात्रयांकितभालस्य १ गलेहस्ताधानस्य ३।१४। कांजिकस्य ५ दिगंबरयोगिनः ५।१५। जलक्रीडायाः ४ शरपत्ररचनायाः गंध

